Digitized by Madhuban Trust, Delhi

Series No.11

सामवेदीय प्रातिशाख्यम्

# ऋक्तन्त्रम्

(सभाष्यम्)

A PRATISAKHYA OF SAMAVEDA

# RIKTANTRAM

with Commentary

Elucidative Editing
&
Publishing by

Dr. GIRIJAPRASAD SHADANGI
Tirupati

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

सामवेदीय प्रातिशाख्यम्

# ऋक्तन्त्रम्

(सभाष्यम्)

A PRATISAKHYA OF SAMAVEDA

# RIKTANTRAM

With Commentary

Elucidative editing
&
Publishing
By

Dr Girijaprasad Shadangi
Tirupati

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

RIKTANTRAM with Commentary

Publisher:
Dr Girijaprasad Shadangi
Place- Tirupati

ISBN:-978-93-5291-978-9
@All right Reserved by Publisher
First Edition: 2018
Pages: 246
Copies-500

Rs: 400/-

Books are sold :
# 103, 1st floor, Sri Padmavati Homes
Yogimallavaram, Tiruchanoor
Tirupati-517503, Andhra pradesh
Email:gpshadangi@gmail.com
Mo-9951051209

Printed by
POD Press, Chennai

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



# विषयानुक्रमणिका



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## सम्पादकीयम्

वैदिकवाङ्मये प्रातिशाख्यस्य महत्वपूर्णं स्थानं विद्यते। शाखां शाखां प्रति प्रतिशाखं, प्रतिशाखं भवं प्रातिशाख्यम् इति व्युत्पत्यनुसारं प्रातिशाख्यं नाम ग्रन्थः प्रतिशाखमधिकृत्य कृतं शास्त्रं विद्यते। वैदिकमन्त्राणां सुरक्षार्थं वैदिककाले आचार्याणां परिषत् आयोजिता भवति। तत्र संहितापाठमधिकृत्य, ध्वनिमधिकृत्य, सन्धिविषयकं उदात्तादिस्वरपदादिविषयकञ्च शास्त्रार्थं भवति स्म। तस्यामेव परिषदि चर्चया संसिद्धविषयाणां स्वरुपमेव प्रातिशाख्यनाम्ना प्रसिद्ध्यते।

संहितासु प्रयुक्तानां पदानां मूलस्वरुपं बोधयितुं पदपाठविषयकानि विधानानि विहितानि। संहितायां विद्यमानानां वर्णपदादीनामुच्चारणप्रक्रिया चोपदिष्टा वर्तते।

### 1.भूमिका

#### 1.1.प्रातिशाख्यायां प्रतिपाद्यांशाः-

प्राचीनपरम्परानुसारेण प्रातिशाख्यं, शिक्षा, व्याकरणादि ग्रन्थेषु प्रतिपाद्यविषयः एक एव। ऋक्प्रातिशाख्ये प्रारम्भिकश्लोके उच्यते –

"शिक्षाच्छन्दोव्याकरणैः सामान्येनोक्तलक्षणम्।
तदेवमिह शाखायामिति शास्त्रप्रयोजनम्।।" इति

प्रातिशाख्यस्य मुख्यप्रतिपाद्यविषयस्तावत् प्रयोगगतलघुता तथा गुरुतायाः निर्णयः, स्वरमात्रायाः वर्णनं, वर्णानां लोपागमविकारादि, स्वर, श्वास, नाद, प्रकृति एवं क्रमः।
उच्यते-

"गुरुत्वं लघुता साम्यं ह्रस्वदीर्घप्लुतानि च।
लोपागमविकाराश्च प्रकृतिर्विक्रमः क्रमः।।
स्वरितोदात्तनीचत्वं श्वासो नादस्तथोभयम्।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयता।।"

(ऋ.प्रा.वि.व.5,6, तै.प्रा. 1.1, 24.4, 24.6, )

पदपाठ, क्रमपाठ इत्यादीनामध्ययनविषयोप्येषां विषयवस्तु भवति।

"जपक्रमविशेषज्ञो वर्णक्रमविचक्षणः।

स्वरमात्राविशेषज्ञो गच्छेदाचार्यसम्पदम्।।"(ऋ.प्रा.वि.व .8)

पदपाठ, अवग्रह, प्रगृह्यादि लक्षणोप्येषां विषयः-

"प्रातिशाख्यनियतमेव पदावग्रहप्रगृह्याप्रगृह्यक्रमसंहिता

स्वरलक्षणमुच्यते तानीमानि प्रातिशाख्यानीत्यर्थः।।"

(नि.1.17)

वर्णसमाम्नायः, वर्णानां अनुप्रदानं, स्थानकरणादि, छन्दसां प्रतिपादनमस्मिन्नेव कृतम्-

"स्थानकरणानुप्रदानानि। व्याकरणं नामेयमुत्तरा विद्या।

सोऽसौ छन्दोशास्त्रेष्वभिविनीत उपलब्ध्याधिगन्तुमुत्सहते।"

(म.भा.1.2.32)

वर्णोच्चारणदोषादीनां निर्धारणमप्येषः ग्रन्थः क्रियते-

"वर्णदोषविवेकार्थम्" (वा.प्रा. 1.26)

**1.2.प्रातिशाख्यशब्दस्याशयः-**

प्रातिशाख्य शब्दस्य व्याख्यानात् तथा निर्वचनाच्च ज्ञायते यत् विदुषामत्र मतैक्यं विद्यते। अस्य सम्बन्धेन विचारद्वयं लभ्यते-

**1.2.1. प्रतिशाखासम्बन्धः -**

अमुं मतमनुसृत्य वाजसनेयीप्रातिशाख्ये उक्तम्- शाखायां शाखायां प्रतिशाखं भवं प्रातिशाख्यम् इति। पाणिनीयसूत्रस्य (4.3.59) भट्टोजीदीक्षितानां टीकायाः ज्ञानेन्द्र सरस्वतीकृत टीकायां प्रतिशाखं भवं प्रातिशाख्यम् इति प्रतिपादितम् । ऋक्प्रातिशाख्यस्य उव्वटभाष्ये मङ्गलाचरणे उक्तम्-

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"शिक्षाच्छन्दोव्याकरणैः सामान्येनोक्तलक्षणम्।
तदेवमिह शाखायामिति शास्त्रप्रयोजनम्।।"

तत्वबोधिन्यां (5.1.3) उक्तम्- "धर्मशास्त्राणां गृह्यग्रन्थानां च प्रातिशाख्यलक्षणवत् प्रतिचरणं पाठव्यवस्थोपलभ्यते"।अनेन ज्ञायते यत् प्राचीनकाले वेदस्य प्रत्येकमपि शाखायाः सम्बद्धं उपरिवर्णित-प्रतिपाद्यविषयाणां विवेचनमनेन ग्रन्थमाध्यमेनैव क्रियते स्म।

**1.2.2. शाखासमूहस्य सम्बद्धः-**

अनेन मतानुसारेण प्रातिशाख्यग्रन्थस्य सम्बन्धः न केवलं शाखाविशेषे परं शाखासमूह इत्यर्थे उपयुज्यते। एवं च प्रातिशाख्यग्रन्थस्य सम्बन्धः न केवलं वेदस्यैकस्याः शाखाया इति न अनेकशाखायाः कृते इत्युक्तम्, तैत्तिरीयप्रातिशाख्ये (4.11) वीत्युपबन्धस्य व्यावर्त्य शाखान्तरे नन्वेवमनेकशाखाविषयत्वे प्रातिशाख्यमिति ग्रन्थस्य आख्या विरुध्यते। नैतदस्ति। द्विशाखाविषयत्वेऽपि तदसाधारणतया उपपत्तेः। तथा बह्वृचानां शाकलवाष्कलात्मकशाखाद्वयविषयं प्रातिशाख्यं प्रसिद्धम्।।

यद्येषां ग्रन्थानां प्रतिशाखासम्बन्धः कल्प्यते तर्हि प्रातिशाख्यानां संख्या शाखानुरूपेण भवेयुः। उपलब्ध प्रातिशाख्यानां संख्या विरला एव। अत एव एतेषां शाखासमूहेन सम्बन्धः इति कल्पनयैव सुकरं भवेत्।

उपर्युक्तनिर्णयः प्रातिशाख्यग्रन्थानामनुपलब्ध्याधारेण कृतम्। परन्तु एतदेव सर्वथा नोचितं मन्ये। प्रातिशाख्यस्य सम्बन्धः वेदस्य प्रतिशाखायां आसीत्। किमर्थं चेत् अद्य वैदिकसाहित्यस्य अनुपलब्धिः एव कारणं, केवल प्राचीनग्रन्थेषु तद्विषये तत्र तत्र उल्लेखं दृश्यते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



**1. 3.सामवेदीयप्रातिशाख्यः-**

सामवेदसर्वानुक्रमणिकायां प्रातिशाख्यरूपेण सप्तदश-लक्षणग्रन्थानामुल्लेखो विद्यते -

"गृह्यं गायत्र ऋक्तन्त्रं सामतन्त्रञ्च पुष्पकम्।
ततोऽवग्रहं च हितवाक्यं स्तोभानुसंहरम्।।
मात्रार्चिके छलं चैव पाणिनीयञ्च शैक्षकम्।
नारदीयं गौतमीयं लोमशीयमतः परम्।।
अग्न आयानुदात्तञ्च रावणीयं ततः परम्।
परिशिष्टे लक्षणेऽस्मिन् वनसंख्या प्रकीर्तिताः।।"

मया सम्पादितस्य फुल्लपोतपुस्तकस्य भूमिकायां लक्षणग्रन्थानां परिचयः विस्तरेण प्रदत्तोऽस्ति, द्रष्टव्यः। गोभिलगृह्यसूत्रस्य व्याख्याकारः भट्टनारायणः ऋक्तन्त्रस्य सम्बन्धः राणायनीयशाखायाः इत्युक्तम्-"राणायनीयानाम् ऋक्तन्त्रप्रसिद्धा विसर्जनीयस्याभिनिष्ठा-नाख्या" इति।।

**1.4.ऋक्तन्त्रस्य परिचयः**

ऋक्तन्त्रं पञ्चप्रपाठकात्मकम्। प्रथमप्रपाठके खण्डचतुष्टयम्। द्वितीयप्रपाठकादारभ्य पञ्चमप्रपाठकपर्यन्तं दशकेन विभक्ताः। द्वितीयप्रपाठके षट्दशकाः, तृतीयप्रपाठके अष्टदशकाः, चतुर्थप्रपाठके सप्तदशकाः एवञ्च पञ्चमप्रपाठके सप्तदशकाः भवन्ति। आहत्य सूत्राणां संख्या 286 विद्यते। परन्तु ग्रन्थान्ते सूत्राणां संख्या 280 अशीत्यधिकशतद्वयं सूत्राणि इति लिखितम्। अस्य ऋचां विस्तरः ऋक्तन्त्रम् एवं व्याकरणमिति अर्थ विद्यते।ऋक्तन्त्रमधिकृत्य सामवेदसर्वानुक्रमणिका उच्यते-

"ऋचां तन्त्र व्याकरणे पञ्चसंख्या प्रपाठकाः।
शाकटायन देवेन द्वात्रिंशत्खण्डिका स्मृताः।।"
तत्रादिमे प्रपाठके चत्वारः खण्डसम्मताः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्वितीये रस इत्युक्तस्तृतीये वसुसंज्ञकम्।।
चतुर्थे पञ्चमे चैव मुनिसंख्या समीरिताः।
वाचो वृत्तिञ्च मासे तु तस्मादुच्चश्रुतीनि च।
आविरादि तथा कर्ण सूत्रं जालालनं स्मृतम्।।
त्रयस्त्रिंशच्च दशकं सूत्रञ्च वसुसंज्ञकम्।
ऋक्तन्त्रञ्च समाप्तं स्याद्विज्ञेयं सामवित्तमैः।।

प्रथमे प्रपाठके अक्षराणामुत्पत्तिस्थानानि, उत्पत्तिप्रकारः, तेषां स्वरूपं च प्रतिपाद्यते। द्वितीये अक्षराणां स्थानं, स्वरः, मात्रानिर्णयः क्रियते। तृतीये तेषां संहिता सन्निकर्षविकाराश्चोद्यन्ते। चतुर्थे विसर्गस्य सकारः, लोपः, अन्यस्य वर्णस्य वर्णान्तरत्वम् इत्यादि विधीयते। पञ्चमे वर्णस्य दीर्घीभावः, द्वित्वं, मूर्धन्यभावः, इत्यादि।

प्रथमप्रपाठकस्य प्रथमखण्डे ध्वन्युत्पादने वायोः महत्वं प्रदर्शयन् कण्ठ्य, तालव्यादि वर्णानामुत्पत्तिर्वर्णिता। द्वितीयखण्डः अक्षरसमाम्नायेन सम्बन्धितः वर्तते। तृतीयखण्डे स्थानानां प्रयत्नानां च विवेचनं कृतम्। चतुर्थखण्डे प्रत्याहारदृष्ट्या वर्णानां संयोजनं विद्यते।

द्वितीयप्रपाठके वर्णानां उच्चारणस्थानं, वर्गविभजनं, अक्षरविभजनस्य च नियमः, मात्रा तथा तेषां विभजननियमाः एवं स्वराणां विवेचनं कृतम्।

तृतीयप्रपाठके संहितायाः लक्षणं, स्वरसन्धिः एवं विसर्जनीयस्य विकारस्य विवरणं कृतम्।

चतुर्थप्रपाठके सन्धेः फलस्वरुपविसर्जनीयस्य स्थाने भवितव्यानां विकाराणां विवेचनं, तथा लोप, आगम एवं दीर्घभावानां विवेचनं कृतम्।

पञ्चमप्रपाठके दीर्घः कुत्र, कदा भवति एतदधिकृत्य विविच्य तदन्ते मूर्धन्यभावस्य विवेचनं कृतम्।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अस्य ऋक्तन्त्रव्याकरणमित्यपि व्यवहारो विद्यते, मूलग्रन्थेषु। पाणिनिव्याकरणसूत्रात् लघुभूतानि सूत्राणि विद्यन्तेऽत्र। यथा "लृतुलसानां दन्ताः", एतत्सूत्रस्थाने, "दन्तेत्स्लाः" इति, "इचुयशानां तालु" इति स्थाने, "तालुनिश्च्ये" इति एवमादीनि सूत्राणि नैकविधानि सन्ति। इदम् "अथ वाचो वृत्तिं व्याख्यास्यामः" इत्यारभ्य "षाद्दन्त्यः" इति समाप्यते।

**1.5.ऋक्तन्त्रस्य कर्तृविचारः-**

भारतीयमनीषिणः सदासर्वदा स्वात्मकथनात् विरताः। अतः प्राचीन आचार्याणां रचनायाः उल्लेखनस्य अभावः दृश्यते। ऋक्तन्त्रस्य प्रणेतारमवलम्ब्य एषैव समस्या वरीवर्ति। शाकटायन तथा औदव्रजीति कर्तृविषये द्वयोर्नामनी भवतः।

**1.5.1.शाकटायनः-**

ऋक्तन्त्रस्य कर्ता शाकटायनः। ग्रन्थान्ते लिख्यते शाकटायनोक्तमृक्तन्त्रव्याकरणं सम्पूर्णम्। सामवेदसर्वानुक्रमणि-कायामपि ऋक्तन्त्रस्य कर्ता शाकटायन इति स्मृतम्-

"ऋचां तन्त्र व्याकरणे पञ्चसंख्या प्रपाठकाः।
शाकटायनदेवेन द्वात्रिंशत्खण्डिका स्मृताः।।"

निरुक्त, प्रातिशाख्यग्रन्थानामध्ययनात् ज्ञायते यत् वैयाकरण-सम्प्रदाये शाकटायनस्य स्थानमत्यन्तं महत्वपूर्णम्। अस्य सिद्धान्तः सर्वत्र समादृतः आसीत्। नागेशभट्टेन लघुशब्देन्दुशेखरे ऋक्तन्त्रं व्याकरणग्रन्थरूपेण स्वीकृत्य अस्य कर्ता शाकटायन इत्युक्तम्। ऋक्तन्त्रव्याकरणे शाकटायनोऽपि इदमक्षरच्छन्दोवर्णशः समनुक्रान्तं यथाऽऽचार्या ऊचुर्ब्रह्मा...न भुक्त्वा न नक्तं प्रब्रूयाद् ब्रह्मराशिः इति ब्रह्मराशिरित्यस्य ब्रह्मप्रतिपादको वर्णराशिरित्यर्थः ।। नागेशोऽप्येव-मेवाह। "नाद इति शाकटायनः" इत्यादि वर्तते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



**1.5.2.औदव्रजिः-**

प्रप्रथमतया वंशब्राह्मणे औदव्रजेः उल्लेखः दृश्यते ..पुष्यशा औदव्रजिः पुष्यशा- औदव्रजिः इति। नारदीयशिक्षायां वर्णोच्चारण-सन्दर्भे उल्लेखितं- तेनास्य करणं सौक्ष्म्यं माधुर्यं चोपजायते। वर्णांश्च कुरुते सम्यक् प्राचीनौदव्रजिर्यथा। पाणिनीयशिक्षायाः पञ्जिकाभाष्ये प्राप्यते - तथा चौदव्रजिः तत्र स्पृष्टं प्रयत्नं करणं स्पर्शानाम्, दुःस्पृष्टमन्तस्थानाम् इति। भट्टोजिदीक्षितस्तु पाणिनीयशिक्षा-व्याख्यायां शब्दकौस्तुभे ऋक्तन्त्रव्याकरणाख्य छान्दोग्यलक्षणस्य प्रणेता औदव्रजिरप्यसूत्रयत् । "अनन्त्यान्त्यसंयोगे मध्ये यमः पूर्वगुणः" इत्यौदव्रजिः । अपि च ऋक्तन्त्रे न्यायेनौदव्रजिः। अनेन ऋक्तन्त्रस्य कर्ता औदव्रजिः इति प्रसिद्ध्यति।

अतः ऋक्तन्त्रस्य अनयोः कतरः कर्तेति निर्धारयितुं न शक्यते इति स्थितौ लघुऋक्तन्त्रसंग्रहस्य संस्करणे डा. सूर्यकान्तेन ऋक्तन्त्रस्य कर्ता शाकटायन इति स्पष्टीकृतम्। कर्तृविषयक द्वैधतायां परवर्ती विदुषा समाधानार्थं प्रयत्नं कृतम्। संस्कृतव्याकरणशास्त्रस्य इतिहासकारः प्रसिद्धः वैदिकः, वैयाकरणिश्च युधिष्ठिरमीमांसकः, तथा ''वैदिकसाहित्य और संस्कृति'' ग्रन्थस्य कर्ता प्रसिद्धः वैदिक इतिहासज्ञः बलदेव उपाध्यायेन ''कर्ता औदव्रजिरिति व्यक्तिगतं नाम तथा शाकटायन इति तस्य गोत्रनाम आसीदि''ति प्रतिपादितम्। अत्र एकस्यैव व्यक्तेः गोत्रजं तथा वैयक्तिकं नाम इति जानीयात्।

**1.6.ऋक्तन्त्रस्थ आचार्याणां विवरणम्-**

**1.6.1. इन्द्रः-** प्राचीन व्याकरणाचार्येषु इन्द्रस्य अत्यन्तं महत्वपूर्णं स्थानं विद्यते। इन्द्रः सर्वप्रथमतया देवतानां प्रार्थनया अव्याकृतः संस्कृतभाषायाः व्याकृतः एवं प्रतिपदप्रकृतिप्रत्यय-विभागस्य विचारं कृत्वा शब्दोपदेशस्य प्रक्रियाप्रचलनमकरोत् ।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उच्यते खलु तैत्तिरीयसंहितायां वाग्वै पराच्यव्याकृतावदत्। ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुर्विति। ...तमिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् (तै.सं-6.4.7)। तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययविभागं सर्वत्राकरोत् (तै.सं-6.4.7 सायणभाष्ये)। इन्द्रेण बृहस्पतिः, अश्विनौ, मृत्युः अथवा यमः एवं कौशिकः विश्वामित्रादिषु सर्वशास्त्रं अधीतम्। जन्मना इन्द्रः ब्राह्मणः एवं कर्मणा क्षत्रियः आसीत्। उच्यते महाभारतस्य शान्तिपर्वणि इन्द्रो वै ब्रह्मणः पुत्रः कर्मणा क्षत्रियोऽभवत् (म.भा, शान्तिपर्व-21.11)। अस्य मन्त्रिपरिषदि सहस्रऋषयः आसन् । उक्तं च कौटिल्य अर्थशास्त्रे इन्द्रस्य हि मन्त्रिपरिषद् ऋषीणां सहस्रम् इति (कौटिल्य अर्थशास्त्रम् 2.15)। इन्द्रः अध्यात्मज्ञानस्य प्राप्तये एकसहस्रवर्षपर्यन्तं ब्रह्मचर्येण आसीत् इति छान्दोग्य उपनिषदि (8.7.11)। स्वस्य प्रियशिष्यः भरद्वाजाय तृतीयपुरुषायुषः समाप्तिसमये वेदस्य अनन्ततायाः ज्ञानोपदेशः इन्द्रेण दत्तमिति तैत्तिरीयब्राह्मणम्-3.10.11।

एषः ऐन्द्रव्याकरणं नामक व्याकरणग्रन्थस्य प्रणयिता। अद्य नोपलभ्यते केवल शास्त्रान्तरेण ज्ञायते। व्याकरणग्रन्थेषु अस्य सूत्राणां तथा मतानां उद्धरणं दृश्यते। येनास्य ग्रन्थस्य प्रामाण्यं सिद्ध्यति। यथा- "जराया ङसीन्द्रस्याचि" (शाकटायन व्याकरणं - 1.2.27), "ऐन्द्रेशानादिषु व्याकरणेषु चान्झलादिरूपस्यासिद्धेः" (हैमबृहद्वृत्यवचूर्णि पृ.10), तत्रैव तृतीयपृष्ठायां

"ब्राह्मैशानमैन्द्रं च प्राजापत्यं बृहस्पतिम्।
त्वाष्ट्रमापिशलं चेति पाणिनीयमथाष्कम्।।"
"इन्द्रश्चन्द्रः काशकृत्स्नापिशलीशाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ।।"
वोपदेवः, कपिकल्पद्रुमः, प्रारम्भिक श्लोके

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकल्यं पाणिनीयकम् ।।"

श्रीतत्वनिधिः, पृ-50

ऋक्तन्त्रेपि "बृहस्पतिरिन्द्राय" (1.4) सूत्रेण इन्द्र नामकस्य वैदिक व्याकरणाचार्यस्य नाम अपि स्मर्यते।

**1.6.2. औदव्रजिः-** आचार्यः औदव्रजेः उल्लेखः स्वराणां सन्धिप्रसङ्गे ऋक्तन्त्रेण कृतम्। यथा "न्यायेनौदव्रजिः" इति (ऋ.तं-2.6.10)। नारदीय शिक्षायां प्राचीन औदव्रजेः स्मरणं दृश्यते। यथा-

"तेनास्यकरणं सौक्ष्म्यं माधुर्य चोपजायते।
वर्णाश्च कुरुते सम्यक् प्राचीनौदव्रजेर्यथा"।। ना.शि.2.8.5

पाणिनीयशिक्षायाः पञ्जिकाव्याख्यायामनेकेषु स्थलेषु अस्य मतानि उद्धृतानि वर्तन्ते। भट्टोजि दीक्षितेन स्वस्य शब्दकौस्तुभनामकग्रन्थे एषः ऋक्तन्त्रस्य कर्तेत्युक्तम्। (शब्दकौस्तुभः पृ.143)।

**1.6.3. बृहस्पतिः-** ऋक्तन्त्रानुसारेण ब्रह्मात् बृहस्पतिना अक्षरज्ञानं प्राप्तं तथा इन्द्राय तदुपदिष्टमिति। उच्यते "ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय" .. (ऋ.तं.1.4)। तथैव महा-12.85.3-10, म.भा-1.1.1 । "बृहस्पतिः बुद्धेः अधिष्ठाता मन्यते" (मै.सं-2.6), श.ब्रा-14.4.1.1। अतः बृहस्पतिं वाचस्पतिः एवं बृहतीपतिः इत्यभिधानेन च व्यवह्रियते शास्त्रेषु। बृहदारण्यकोपनिषदि उच्यते – "एष एव उ बृहस्पतिर्वाग्वै बृहती तस्या एव पतिस्तमादु बृहस्पतिः" (1.3.20)। ऐतरेयब्राह्मणे एनं देवतानां पुरोहित उच्यते। यथा – "बृहस्पतिर्वै देवानां पुरोहितः" (ऐ,ब्रा,8.26)। छान्दोग्योपनिषदि बृहस्पतेः सामगानं क्रौञ्चपक्षिणः स्वरसदृशं उक्तम्। उच्यते – "विनर्दि साम्नो वृणे... क्रौञ्च बृहस्पतेरपध्वान्तं वरुणस्य"... (छा.उ,2.22.1)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



बृहस्पतिना विरचितस्यार्थशास्त्रस्यापि उल्लेखः दृश्यते। बृहस्पतिना इन्द्रकृते प्रतिपदपाठस्य निर्धारणार्थं शब्दपारायणनामकं शास्त्रं विरचितम्। महाभारते उच्यते – "बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच" (म.भा,1.1.1)। प्रक्रियाकौमुद्यां उच्यते- "दिव्यं वर्षसहस्रमिन्द्रो बृहस्पतेः सकाशात् प्रतिपदपाठेन शब्दान् पठन् नान्तं जगामेति" (भागः-1, पृ.7)। "शब्दपारायणशब्दो योगरुढः शास्त्रविशेषस्य" इति महाभाष्ये (1.1.1 कैयटः)। भर्तृहरिणा – "शब्दपारायणं रूढिशब्दोऽयं कस्यचित् ग्रन्थस्य" (महाभाष्य दीपिका पृ,21)। एनं वास्तुशास्त्रस्य उपदेशकः इत्यपि उच्यते । मत्स्यपुराणे – "तथा शुक्रबृहस्पती.....। अष्टादशैते विख्याता वास्तुशास्त्रोपदेशकाः" इति (251.3-4)। बृहस्पतिस्मृतेः अभिधानात् नीतिशास्त्रेण साकं अस्य सम्बन्धः सुस्पष्टं ज्ञायते।

**1.6.4. ब्रह्मा**- ऋक्तन्त्रानुसारेण व्याकरणशास्त्रस्य आदि प्रवक्ता ब्रह्मा उच्यते। अनेन अक्षरसमाम्नायस्य सर्वप्रथमं उपदेशः बृहस्पतये दत्तः। ब्रह्मा बृहस्पतये प्रोवाच इति (ऋ.तं,1.2)। परमेष्ठी एवं अथर्वा द्वावेव ब्रह्मणः सकाशात् ब्रह्मविद्यायाः ज्ञानं प्राप्तम्। प्राचीनभारतीय वाङ्मयस्य आदि प्रवक्तृरुपेण ब्रह्मणः उल्लेखः क्रियते। नाट्यशास्त्रकारेण पाठ्यं, गीतं, अभिनयं तथा रसं क्रमशः ऋग्वेदः, सामवेदः, यदुर्वेदः एवं अथर्ववेदात् संगृह्य नाटकानां रचनायाः श्रेयः ब्रह्मणे दीयते।

जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि ।। ना.शा.1

अयं वास्तुशास्त्र तथा दण्डनीतिविषयकः ग्रन्थानां रचयिता अपि कथ्यते।(मत्स्यपुराणे-252.2)

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



**1.6.5. भरद्वाजः**- ऋक्तन्त्रानुसारेण भरद्वाजेन इन्द्रात् व्याकरण-शास्त्रमधीतम्। इन्द्रो भरद्वाजाय घोष तथा ऊष्म वर्णानामुपदेशं अदात् तथा च आयुर्वेदस्य ज्ञानं प्रायच्छत्। ऐतरेयआरण्यके उच्यते-तस्य यानि व्यञ्जनानि तच्छरीरम्, यो घोषः स आत्मा, य उष्माण स प्राण... एतदु हैवेन्द्रो भरद्वाजाय प्रोवाच (ऐ.आ,2.2.4)। चरकेन – तस्मै प्रोवाच भगवानायुर्वेदं शतक्रतुः (चरकसंहिता-1.23)। तृणञ्जयः एवं भृगुद्वारा क्रमशः पुराणः एवं धर्मशास्त्रस्य उपदेशं प्राप्तमिति वायुपुराणे (1.3.63)। इन्द्रादुपलब्धं व्याकरणज्ञानं भरद्वाजः ऋषिभ्यः प्रायच्छत्। आत्रेयः पुनर्वसु तथा गौतमेन क्रमशः आयुर्वेदस्य तथा पुराणस्य अध्ययनं चकारि। वाजसनेयी प्रातिशाख्ये आख्यात क्रियायां भरद्वाजेन साकं विशेषः सम्बन्धः उक्तम्। अनेन ज्ञायते यत् अस्य आख्यातविषयकं मतं सर्वमान्यमासीत्।

भारद्वाजकमाख्यातं भार्गवं नाम भाष्यते।<br>
वासिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः।। वा.प्रा,8.65

काशिकायां भरद्वाजस्य एकविंशति अपत्यानां निर्देशः विद्यते। (पा.सू,2.1.19 काशिका)

**1.6.6.शाकटायनः -** वैयाकरणसम्प्रदाये आचार्य शाकटायनस्य नाम अत्यन्तं सादरेण गृह्यते। (व्याकरणे शकटस्य च तोकम् वैयाकरणानां च शाकटायन आह – म.भा-3.3.1)ऋक्तन्त्रं अस्यैव कृतिरिति मन्यते। शैशिरियशिक्षानुयायी शैशिरीयपरम्परायाः आचार्यः इति मन्यते। (शैशिरस्य तु शिष्यस्य शाकटायन एव च-शै.शि प्रारम्भिकश्लोकः)। वोपदेवस्य कविकल्पद्रुमे तथा वैष्णवग्रन्थे श्रीतत्वनिधेः प्रारम्भिकश्लोके प्रमुखवैयाकरणानां मध्ये शाकटायनस्य स्मरणमपि क्रियते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"इन्द्रश्चन्द्र काशकृत्स्नापिशलीशाकटायनः।
पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः।।

कविकल्पद्रुमः

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकल्यं पाणिनीयकम्।।"

श्रीतत्वनिधिः

शाकटायनस्य सर्वविदितः सिद्धान्तः –सम्पूर्णनामशब्दाः धातुजाः एव। तत्र नामाख्यातजानीति शाकटायनो नैरुक्त समयश्च- नि.1.13। एतेषां मतानां निर्देशः प्रातिशाख्येषु , बृहद्देवतायां तथा पाणिनिना बहुशः कृतम्।

ऋक्तन्त्र तथा तस्य वृत्यां ऐतिकायन, जालकाक, नकुलमुखः तथा नैगि इत्यादीनां उल्लेखः दृश्यते, परन्तु एतेषां निर्देशः अन्यत्र न लभ्यते। अतः एतेषां विषये विशेषरूपेण किमपि न ज्ञायते।

**1.7. ऋक्तन्त्रग्रन्थस्य संस्करणानि-**

अद्यावधिपर्यन्तं ऋक्ततन्त्रस्य संस्करणत्रयं प्रकाशितम्। येषां सम्पादनस्य श्रेयः डा.ए.सी.वर्नेल, डा. मेतल्लाहुरु सूर्यकान्त तथा मायुरं म.रामनाथदीक्षितवर्याणामेव।

**1.7.1**.ऋक्ततन्त्रस्य प्रथमसंस्करणं डा. ए. सी. बर्नेल महोदयेन सन् 1879मध्ये मङ्गलोर, कर्णाटकतः प्रकाशितम्। अस्य संस्करणस्य प्रति गोयनका पुस्तकालय, वाराणस्यां विद्यते। अन्यत्र जीर्णशीर्णावस्थायां लभ्यते।

**1.7.2.**विद्याभास्कर, वेदान्तरत्न, व्याकरणतीर्थादि विरुदावल्या अभिषिक्तेन डा. मेतल्लाहुरु सूर्यकान्त महोदयेन दिसम्बर 1933 तमे वर्षे लाहौरतः पञ्जाबविश्वविद्यालयस्य रौप्यजयन्त्यवसरे प्रकाशितम्।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



1970तमे वर्षे एतदेव पुस्तकं मेहरचन्दलक्षणदासेन, नईदिल्लीतः प्राकाश्यं नीतम्। एतदपि इदानीं नोपलभ्यते।

**1.7.3.**धर्मज्ञः, विद्यावाचस्पतिः ब्रह्मश्री मायुरम् म. रामनाथ-दीक्षितवर्येण 1982 तमे वर्षे श्रुतिस्मृतिपुराणप्रकाशनसमित्या प्रकाशितः सामवेदीयः उत्तरार्चिकः पदपाठपुस्तकस्यान्ते सविवरणं ऋक्तन्त्रं सम्पाद्य प्रकाशितम्। पुस्तकमिदं नोपलभ्यते।

**1.8.प्रस्तुतसंस्करणस्यावश्यकता-**

अद्यावधि यद्यपि संस्करणत्रयं जातं तथापि तेषां ग्रन्थानामुपलब्धिः न दृश्यते। डा सूर्यकान्तमहोदयेन प्रकाशितं संस्करणं यद्यपि विषयबाहुल्यं दृश्यते परन्तु तत्र विषयाणां प्रतिपादनं आंग्लमाध्यमेन कृतत्वात् स्पष्टतया नावगम्यते। अन्यदपि तत्र द्वितीयप्रपाठकादेव सूत्राणां वृत्तिः उदाहरणं च प्रदत्तमस्ति। रामनाथदीक्षितकृतविवरणं प्रथमप्रपाठकात् लभ्यते इति कारणात् तदपि अत्र आन्तं सूत्रे संयोजितम्। इतोपि सूत्राणामर्थं स्पष्टरूपेणावबोधाय हिन्दीभाषया अर्थमपि प्रदत्तम्। केचनसूत्राणां पृथक् रूपेणार्थकल्पनं ऋक्तन्त्रविवृत्या कृतं वर्तते एतदपि आवश्यकम्मत्वा स्थापितम्। पारम्पर्यानुसारेण छात्राणामध्ययन-सौकर्याय आदौ तावत् ऋक्तन्त्रस्य मूलपाठः, अन्ते तावत् परिशिष्टत्वेन ऋक्तन्त्रस्थ अकारादिसूत्रानुक्रमणिका, पारिभाषिक-शब्दावली, सूत्रस्थ शब्दानुक्रमणिकादि दत्वा पुस्तके यथा एतत्सम्बन्धि सर्वाः विषयाः संगृहीताः भवेयुः तथा कृता वर्तते। भूमिकायां प्रातिशाख्यानां प्रतिपाद्यांशाः, ऋक्तन्त्रस्य परिचयः, कर्तृविचारः, संस्करणानि तथा प्रस्तुतसंस्करणस्यावश्यकतादि प्रतिपादितानि।

इति विदुषां वशंवदः
गिरिजाप्रसाद षडङ्गी

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## सम्पादकीय (हिन्दी)

भारतीय वाङ्मय में वेदों के स्थान सर्वोपरि है। वेदों के मन्त्रों का व्याकरणदृष्टि में निरुपण करना प्रातिशाख्यों का कार्य है। ऐसे ही सामवेद के ऋचाओं का निरूपण हेतु ऋक्तन्त्र की रचना की गयी है। ऋक्तन्त्र में साममन्त्र तथा उनसे सम्बन्धित विकार आदि का विशद विवेचन किया गया है। कालक्रम से भाषा और भाव की दृष्टि से संहिताओं का अर्थ अवबोध दुरुह हो गया। इसको सुबोध बनाने के लिए वेदाङ्गों का प्रणयन किया गया। भाषा विषयक दुरुहता के निराकरण के लिए निरुक्त, शिक्षा, प्रातिशाख्य और व्याकरण की रचना की गई। पद-निरुक्ति और व्युत्पत्ति के परिज्ञान से अर्थ-निर्धारण अत्यन्त ही सरल हो जाता है। स्वर वर्ण आदि के उच्चारण-प्रकार का ज्ञान शिक्षा से प्राप्त होता है। पदों की मीमांसा व्याकरण करता है। शिक्षा के ही अन्तर्गत प्रातिशाख्यों की गणना की गई है। प्राचीन परम्परा के अनुसार प्रातिशाख्य, शिक्षा, व्याकरण आदि ग्रन्थों की विषयवस्तु एक ही है।

प्रातिशाख्यों का प्रमुख प्रतिपाद्य विषय है- प्रयोगगत लघुता तथा गुरुता का निर्णय, स्वरमात्राओं का वर्णन, वर्णादि के लोपागमविकारादि, स्वर, श्वास, नाद, प्रकृति, विकृतिऔर क्रम। पदपाठ, क्रमपाठ इत्यादि का अध्ययन भी इनका विषय रहा है। वर्ण समाम्नाय, वर्णों के अनुप्रदान,स्थान, करणादि, छन्द इत्यादि का प्रतिपादन भी इन ग्रन्थों में किया गया है। वर्णोच्चारण आदि का निर्धारण भी वे ही ग्रन्थ करते है।

प्रातिशाख्य शब्द की व्याख्या और निर्वचन से ज्ञात होता है कि विद्वानों में इसके आशय के विषय में एकमत नहीं है। प्रातिशाख्य से सम्बन्ध - इस मत के अनुसार ये ग्रन्थ वेदों की प्रत्येक शाखा के प्रतिपाद्य विषय का विवेचन करते है, अतएव इनको प्रातिशाख्य कहा

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



जाता है। इससे यह ज्ञात होता है कि प्राचीनकाल में वेद की प्रत्येक शाखा से सम्बद्ध उपरिवर्णित प्रतिपाद्य विषयों का विवेचन इन ग्रन्थों में किया जाता था। शाखासमूह से सम्बद्ध- इस मत के अनुसार प्रातिशाख्य ग्रन्थों का सम्बन्ध शाखा विशेष से न होकर शाखासमूह से है, और एक प्रातिशाख्य का सम्बन्ध वेद की एक शाखा न होकर शाखाओं से है। यदि इन ग्रन्थों को प्रतिशाखा से सम्बद्ध माना जायेगा तो प्रातिशाख्यों की संख्या शाखानुरुप ही होनी चाहिए। उपलब्ध, प्रातिशाख्यों की संख्या बहुत ही कम है। अतएव इनको शाखासमहू से सम्बद्ध मानना ही अधिक उचित है।

उपर्युक्त निर्णय प्रातिशाख्य-अनुपलब्धि के आधार पर किया गया है। परन्तु यह उचित नहँी है। प्रातिशाख्यों का सम्बन्ध वेद की प्रतिशाखा से ही था । क्योंकि आज विपुल साहित्य उपलब्ध नहँी है और उसका विवरण यत्र तत्र प्राचीन ग्रन्थों मे प्राप्त है। इसी आधार पर वैदिकसाहित्य की विपुलता का ज्ञान होता है। इसी प्रकार प्रातिशाख्य से सम्बद्ध रहे होंगे, परन्तु आज वे प्राप्त नहीं है। अतः इस आधार पर इनको प्रतिशाखा से सम्बद्ध न मानकर शाखासमूह से सम्बद्ध मानना उचित नहीं है।

इन ग्रन्थों को पार्षद, पारिषद और छन्दोभाषा के नाम से भी जाना जाता है। छन्दोभाषा की व्याख्या वैदिकभाषा और प्रातिशाख्य दोनों अर्थो मे की गई है। इन ग्रन्थों को पार्षद या पारिषद कहने का विशेष प्रयोजन है। परिषद् का अर्थ है सभा या गोष्ठी या समिति जो अनेक व्यक्तियों की समष्टि है। अनेक स्थलों पर इन परिषदों का विवेचन उपलब्ध होता है, जिससे इनके अस्तित्व का परिज्ञान होता है। इन परिषदों का गठन वेद, वेदाङ्ग, धर्मशास्त्र, दर्शन, ध्वनि-विज्ञान,व्याकरण आदि विषयों पर परिचर्चा के निमित्त किया जाता था। इनमें कुलपति के शिष्यगण भी भाग ले सकते थे, विद्धानों को ही

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आमन्त्रित किया जाता था। इनकी संख्या के विषय में प्राचीन विद्वानों का ऐकमत्य नहीं है। इनकी अधिकतम संख्या 21 हो सकती थी। इन परिषदों के अनुमोदन के अनन्तर ही सिद्धान्त विशेष की प्रतिष्ठा प्राप्त होती थी। परिषद् के द्वारा अनुमोदित होने के कारण प्रातिशाख्यों को पार्षद या पारिषद और वैदिकभाषा से सम्बन्धित होने के कारण छन्दोभाषा अभिधान से अभिहित किया जाता है। छन्दसि छान्दस आदि शब्दों का प्रयोग वैदिकी के लिए सदा ही होता रहा है।

इसी सन्दर्भ में प्रसङ्गतः प्राप्त शाखा और चरण शब्दों का विश्लेषण और विवेचन आवश्यक है, जो इस प्रकार है- ऋषि और उनके अनुयायियों के समूह से शाखा का बोध होता है। इस आधार पर वेद की 1130 शाखाओं के अस्तित्व की सूचना मिलती है। प्रत्येक शाखा से सम्बन्ध संहिता, ब्राह्मण,उपनिषद्, आरण्यक, गृह्यसूत्र और प्रातिशाख्य आदि थे। इन शाखाओं में मूलभूत विशेष अन्तर नहीं था। अतएव एक शाखा के अध्ययन से अन्य शाखाओं का ज्ञान कोई कठिन कार्य नहीं था। प्राचीनकाल में चरण ऐसी शिक्षासंस्था को कहा जाता था, जिसमें वेद की किसी एकशाखा का अध्ययन साङ्गोपाङ्गरीति से गुरुशिष्यपरम्परा से किया जाता था। चरण में अनेक शाखाओं के अनुयायी एक साथ मिलकर विचारविमर्श किया करते थे। कुछ लोगों ने चरण और शाखा शब्दों को समानार्थक माना है।

अद्यावधि उपलब्ध और विभिन्न स्रोतों से ज्ञात प्रातिशाख्यों का संक्षिप्त विवरण इस प्रकार है- प्राचीनता और प्रामाणिकता की दृष्टि से ऋक्प्रातिशाख्य का महत्वपूर्ण स्थान है। इसके प्रवक्ता का नाम आचार्य शौनक है। इसे शाकलशाखा की उपशाखा शैशिरीय से सम्बद्ध माना गया है। 18 पटलों में विभक्त इस प्रातिशाख्य में वर्ण,

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पद, संहिता, सन्धि, स्वर, छन्द, क्रमपाठ और वेदाध्ययन विषयक विवेचन किया गया है। इस पर उपलब्ध प्रमुख भाष्य एवं टीकाएँ है- उवट कृत –उवटभाष्य एवं पार्षदवृत्ति, विष्णुमित्रकृत-वर्गद्धयवृत्ति और पशुपतिनाथ शास्त्री कृत व्याख्या।

वाजसनेयी प्रातिशाख्य शुक्लयजुर्वेद की वाजसनेयी शाखा से सम्बद्ध है। संस्कृतवाङ्मय में बहुधा निर्दिष्ट वररुचि कात्यायन को इस प्रातिशाख्य का रचयिता माना जाता है। यजुर्वेदीय प्रातिशाख्यों में यह अत्यन्त महत्वपूर्ण है। इस प्रातिशाख्य में आठ अध्याय है, जिसमें परिभाषा, स्वर और संस्कार आदि विषयों का विस्तृत विवेचन किया गया है। काण्व, शाकटायन, शाकल्य आदि आचार्यों के मतों का निर्देश इसमें मिलता है। वाजसनेयी प्रातिशाख्य पर उवट और अनन्त भट्ट के प्रसिद्ध भाष्य है।

तैत्तिरीयप्रातिशाख्य तैत्तिरीयशाखा से सम्बद्ध है। सम्पूर्ण ग्रन्थ में 24 अध्याय है। इसमें अक्षरसमाम्नाय के अन्तर्गत अनेक पारिभाषिक शब्दों का विवेचन, संहितापाठ, प्रग्रह, जटापाठ आदि विषयों का विस्तृत विवरण प्रस्तुत किया गया है। इस पर माहिषेय कृत पदक्रमसदन,सोमः प्रायंकृत त्रिभाष्यरत्न और गोपालयज्वा कृत वैदिकाभरण ये तीनों भाष्य महत्वपूर्ण है।

अथर्वप्रातिशाख्य का सम्बद्ध किसी शाखा विशेष से न होकर सामान्य रूप से अथर्ववेद से है।इस प्रातिशाख्य के प्रवक्ता का नाम ग्रन्थ में कहीँ नहीँ आया है। इससे विश्वबन्धु शास्त्री और डा सूर्यकान्त सम्पादित दो संस्करण प्राप्त होते है, जिनको क्रमशः लघुपाठ और बृहत्पाठ अभिधान से भी अभिहित किया गया है। डा सूर्यकान्त ने अपने संस्करण में एक अनाम भाष्य को भी रखा है। इसमे तीन प्रपाठक है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शौनकीया चतुराध्यायिका ह्विटनी को प्राप्त पाण्डुलिपि के अन्त में शौनक का नाम निर्दिष्ट होने के कारण इसे शौनकीय कहा गया है। इसका सम्बद्ध पैप्पलाद शाखा से है। इसमें चार अध्याय है, जिसमें स्वर,प्रयत्न,सन्धि आदि विषयों का विस्तृत विवेचन किया गया है।

सामवेदीयप्रातिशाख्यों मे सामतन्त्र का सम्बन्ध कौथुम तथा राणायनीय शाखा से सम्बद्ध है। प्राचीन और आधुनिक विद्वानों ने उसे औदव्रजि प्रणीत कहा है। सत्यव्रतसामाश्रमी इसको गार्ग्य की रचना मानते है। इसमें 13 प्रपाठक है, जो दशकों में विभक्त है। कुल 1311 सूत्र है। इसमें स्वर, मात्रा, गान, सन्धि आदि विषयों का विवेचन किया गया है। इसको प्रतिष्ठित करने का श्रेय पं ए.एम्, रामनाथ दीक्षित को है।

सामवेद से सम्बन्धित अक्षरतन्त्र नामक लघुकाय ग्रन्थ उपलब्ध है। इसका प्रवक्ता महामुनि आपिशालि को माना गया है। अक्षरतन्त्र में सामगानों में प्रयुज्यमान स्तोम आदि का निर्देश किया गया है। इस में सामवेद सम्बद्ध विषयों का विवेचन किया गया है।

पुष्पसूत्र या फुलसूत्र इसमें माध्यन्दिनपवमानादि कर्मों में विनियुक्त ऊहरहस्यसाम विषयक विवेचन किया गया है। ग्रन्थ में कतिपय स्थलों पर इसको पुष्पाचार्य की कृति कहा गया है। सामवेद सर्वानुक्रमणी के अनुसार इसके प्रणयनकर्ता वररुचि है। इस ग्रन्थ में 10 प्रपाठक है। इस पर अजातशत्रु कृत पुष्पसूत्रभाष्य प्राप्त है। सामवेदसर्वानुक्रमणी में रामनाथदीक्षित के बृहद्भाष्य का विवेचन प्राप्त होता है, वह भी उपलब्ध है। इसमें सामगान, मात्रा, स्वर, सन्धि, आदि विषयों का विशद वर्णन किया गया है।

विषय और महत्ता की दृष्टि से सामवेद के प्रातिशाख्यों में ऋक्तन्त्र का विशिष्ट स्थान है। इसकी विशिष्टताओं का पर्यालोचन

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



करने पर इसका सामवेद से सम्बन्ध स्पष्ट एवं पुष्ट हो जाता है। इसमें निर्दिष्ट अनेक सूत्रों का विधान केवल गान को दृष्टि मे रखकर किया गया है। किट् किट् संस्वाद(ज्य), निगार(ह) गति तथा हुम् आदि ध्वनियों का उल्लेख किया गया है, जिनका सम्बन्ध केवल सामवेद से ही है। आचार्य नैगि का उल्लेख अनेक स्थानों पर किया गया है, जिनकी प्रतिष्ठा एक सामवेदीय आचार्य के रूप में है। इसके अतिरिक्त वृत्तिकार ने भी ऋक्तन्त्र के सूत्रों के अधिकांश उदाहरण सामवेद से ही दिए है। उपर्युक्त प्रमाणों के आधार पर यह सिद्ध होता है कि ऋक्तन्त्र सामवेद से ही सम्बन्धित है। प्राचीनकाल से ही इसका सम्बन्ध सामवेद की राणायनी शाखा से माना जाता रहा है।

आत्मकथन से विरत रहना भारतीय मनीषियों की परम्परा रही है। इसमें प्राचीन आचार्यों के विषय में, स्वयं उनके द्वारा उल्लिखित सामग्री का अभाव है। ऋक्तन्त्र में प्रणिता के विषय में भी इसी प्रकार की कठिनाई उपस्थित होती है। ऋक्तन्त्र का सर्वप्रथम सम्पादन डा वर्नेल ने किया था, परन्तु वे कर्ता के विषय में किसी निर्णय पर नहीं पहुँच सके। डा सूर्यकान्त ने ऋक्तन्त्र का एक अन्य संस्करण प्रकाशित किया, जिसकी भूमिका में उन्होंने इसके कर्ता के रूप दो आचार्यों का उल्लेख किया है। प्रथम आचार्य है- औदव्रजि और द्वितीय शाकटायन। उनका मत है कि औदव्रजि ऋक्तन्त्र के मूलकर्ता थे, शाकटायन ने कालान्तर में उसका संस्कार और परिवर्धन किया। अतः ये ही आचार्य ऋक्तन्त्र के कर्ता के रूप में स्वीकृत किए जा सकते है।

औदव्रजि का सर्वप्रथम उल्लेख वंशब्राह्मण में किया गया है, जिसमें उन्हें पुष्यशा औदव्रजि कहा गया है। नारदीयशिक्षा में भी प्राचीन आचार्य औजव्रजि का वर्णोच्चारण के सन्दर्भ में उल्लेख है। पाणिनीयशिक्षा पर जो पञ्जिकाभाष्य प्राप्त होता है, उसमें अनेक

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नियमों को आचार्य औदव्रजि के नाम से उद्‌घृत किया गया है। औदव्रजि से सम्बद्ध इन नियमों का ऋक्तन्त्र के नियमों से अधिक साम्य है। इनमें कुछ ऐसे भी नियम है,जिनका ऋक्तन्त्र में कोई निर्देश नहीं है। भट्टोजी दीक्षित ने शब्दार्थकौस्तुभ में औदव्रजि को ऋक्तन्त्र का कर्ता स्वीकार किया है। इनके अनुसार यदि वर्गों के प्रथम चार वर्णों के बाद वर्ग का पञ्चम वर्ण आए तो वर्ग के प्रथम चार वर्ण यम को प्राप्त हो जाते है, यह यम सम्बन्धी नियम आचार्य औदव्रजि का है। भट्टोजी द्वारा उद्धृत यह नियम ऋक्तन्त्र में प्राप्त होता है।

ऋक्तन्त्र के रचयिता के सम्बन्ध में दूसरा नाम शाकटायन का लिया जाता है। निरुक्त,प्रातिशाख्य ग्रन्थों तथा परवर्ती व्याकरण ग्रन्थों के अध्ययन से ज्ञात होता है कि वैयाकरण सम्प्रदाय में शाकटायन का अत्यन्त ही महत्वपूर्ण स्थान था। इनके सिद्धान्त सर्वत्र समादृत थे। सामवेद सर्वानुक्रमणी में शाकटायन को ऋक्तन्त्र का प्रणेता माना गया है। नागेश भट्ट ने लघुशब्देन्दुशेखर में ऋक्तन्त्र को व्याकरणग्रन्थ के रूप में स्वीकार किया है तथा शाकटायन को इसका कर्ता। इस प्रसङ्ग में नागेश भट्ट ने ऋक्तन्त्र में प्राप्त शब्दराशि के उपदेश क्रम में आचार्यो की परम्परा तथा उपदेश सम्बन्धी निषेध विधानों को शाकटायन कर्तृक बताया है। ऋक्तन्त्र की पुष्पिका में भी ऋक्तन्त्र का सम्बन्ध शाकटायन से ही स्थापित किया गया है।

अधिकांश विद्धानों ने ऋक्तन्त्र का रचयिता आचार्य शाकटायन को ही माना है। ऋक्तन्त्र के लेखक के विषय में सूर्यकान्त की पूर्वोक्त विप्रतिपत्ति सम्भवतः कालान्तर में दूर हो गयी थी, क्यों कि लघुऋक्तन्त्रसंग्रह के संस्करण में इन्होने शाकटायन को ही ऋक्तन्त्र का कर्ता माना है एवं ऋक्तन्त्र को उनकी उपलब्धि एकमात्र कृति। कर्तृ विषयक इन द्वैधता का परवर्ती विद्धानों ने समाधान ढूँढने का प्रयत्न किया है। युधिष्ठिर मीमांसक और बलदेव उपाध्याय का

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सुझाव है कि औदव्रजि लेखक का वैयक्तिक नाम था तथा शाकटायन गोत्र नाम था। परम्परा से प्राचीन ग्रन्थों में औदव्रजि तथा शाकटायन दोनों नामों का उल्लेख ऋक्तन्त्र के रचयिता के रूप में मिलता है, उसका समाधान, समन्वय इन नामों को एक ही व्यक्ति के गोत्रज तथा वैयक्तिक नाम मानने से हो जाता है।।

उपर्युक्त विवेचन से ऋक्तन्त्र का कर्ता शाकटायन है , यह सिद्ध हो जाने पर ग्रन्थ के काल-निर्धारण में सुविधा हो जाती है। प्राचीन वैयाकरणों की श्रृंखला में शाकटायन का निःसन्देह प्रमुख स्थान था। यास्क से आरम्भ कर पाणिनि तक अनेक वैयाकरणों ने इनके सिद्धान्तों को मान्यता दी है। निरुक्ति में शाकटायन के मतों का एक प्रतिष्ठित विद्वान के सिद्धान्तों के रूप में निर्देश इनके काल-निर्धारण में विशेष सहायक है। शाकटायन सम्बन्धी यास्क के इन उल्लेखों से यह सिद्ध होता है कि शाकटायन इस समय तक वैयाकरणों में प्रसिद्धि प्राप्त कर चुके है। शाकटायन का समय सामान्यतः 800 ई.पू के लगभग माना जाता है। शाकटायन इनके पूर्ववर्ती थे, अतः ये आठवी शती ई.पू के बाद के नहीं हो सकते । शाकटायन विरचित मूल ऋक्तन्त्र का समय भी 800 ई.पू से पहले होना चाहिए।

ऋक्तन्त्र जिस रूप में आज प्राप्त है, उससे प्रतीत होता है कि इसके कलेवर में प्रक्षेपों के कारण वृद्धि हुई है। ऋक्तन्त्र के अनेक सूत्र भाषा से सम्बन्ध रखते है। तथा अनेक सूत्रों पर पाणिनि का प्रभाव सुस्पष्ट है। इससे प्रतीत होता है कि ऋक्तन्त्र का उपलब्ध रूप पाणिनि के समय का है। पाणिनि का समय 500 ई.पू के लगभग माना जाता है। ऋक्तन्त्र के वर्तमान कलेवर का समय इसी काल का है। इसी साम्य को देखकर परवर्ती विद्वानों ने इसे व्याकरण के रूप में स्वीकार किया है ।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अद्यावधि इसके कई संस्करण प्रकाशित हुए है, जिनके सम्पादन का श्रेय डा वर्नेल तथा डा सूर्यकान्त को है। ऋक्तन्त्र का प्रथम संस्करण डा ए सी बर्नेल ने सन् 1879 में मंगलोर से प्रकाशित किया था । इस संस्करण की एक प्रति गोयनका पुस्तकालय वाराणसी में है। यह प्रति अत्यन्त ही जीर्ण शीर्ण अवस्था में है।

ऋक्तन्त्र का द्वितीय संस्करण डा सूर्यकान्त ने दिसम्बर 1833 में लाहौर से प्रकाशित कराया था। इसमें सूत्र और वृत्ति के साथ ऋक्तन्त्र विवृत्ति नामक परिशिष्ट भी है। इस संस्करण के प्रारम्भ में विस्तृत भूमिका पाठान्तर और अन्त में परिशिष्ट रूप में टिप्पणियाँ दी गयी है। यही संस्करण अब तक प्राप्त था। अब उपलब्ध नहीं है। डा सूर्यकान्त लिखित परिचयात्मक भूमिका, आलोचनात्मक टिप्पणियाँ और पाठान्तर विषय को सुबोध बनाने में अत्यन्त सहायक है।

मायूरम् रामनाथ दीक्षित ने सामवेदीय उत्तरार्चिक पदपाठ पुस्तक के अन्त में ऋक्तन्त्र का विवरणसहित 1982 में चेन्नई से सम्पादित कर प्रकाशित किया था। यह ग्रन्थ अब उपलब्ध नहीं है।

ऋक्तन्त्र पाञ्च प्रपाठकों में विभक्त है। प्रथमप्रपाठक में चार उपखण्ड है। प्रथम उपखण्ड में ध्वनि-उत्पादन में वायु का महत्व प्रदर्शित करते हुए कण्ठ्य, तालव्य आदि वर्णों की उत्पत्ति का वर्णन है। द्वितीय उपखण्ड अक्षरसमाम्नाय से सम्बद्ध है। तृतीय उपखण्ड में स्थान और प्रयत्न का विवेचन है और चतुर्थ उपखण्ड में प्रत्याहार की दृष्टि से वर्णों को संयोजित किया गया है।

द्वितीयप्रपाठक से पञ्चमप्रपाठक तक का विभाजन दशकों में किया गया है। द्वितीयप्रपाठक में छः दशक, तृतीयप्रपाठक में आठ दशक तथा चतुर्थ एवं पञ्चमप्रपाठक में सात दशक है। दशक का अर्थ दश सूत्रों के समूह से है, परन्तु चतुर्थप्रपाठक के चतुर्थ दशक में

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



चौदह सूत्र एवं पञ्चमप्रपाठक के द्वितीय एवं सप्तमदशक में ग्यारह सूत्र है, ये अपवाद है। सूत्रों की कुल संख्या 286 है।

द्वितीयप्रपाठक से सर्वप्रथम उच्चारणस्थान, वर्गविभाजन, अक्षरविभाजन के नियम, मात्रा एवं उसके विभाजननियम और स्वर का विवेचन किया गया है। तृतीयप्रपाठक में संहिता का लक्षण, स्वरसन्धि और विसर्जनीयः विकार का विवरण है। सन्धि के फलस्वरूप विसर्जनीय के स्थान में होने वाले विकारों का विवेचन चतुर्थप्रपाठक के आरम्भ में किया गया है। तदनन्तर लोप, आगम और दीर्घभाव का विवेचन किया गया है। दीर्घ कहाँ और कब होता है इस प्रसङ्ग के अनन्तर मूर्धन्यभाव का विवेचन पञ्चमप्रपाठक मे है।

इति शम्

आपका विनीत

डा गिरिजाप्रसाद षडङ्गी

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



# सङ्केतिका

======

| | |
|---|---|
| उ.भा | उवटभाष्यम् |
| ऋ.अ | ऋग्वेदानुक्रमणिका |
| ऋ.त | ऋक्तन्त्रम् |
| ऋ.तं.वि | ऋक्तन्त्रविवृत्तिः |
| ऋ.प्रा | ऋग्वेदप्रातिशाख्यम् |
| ऋ.भा | ऋग्वेदभाष्यम् |
| ऐ.आ | ऐतरेय आरण्यकम् |
| का.व्या | कातन्त्रव्याकरणम् |
| कौ.शि | कौटिलीय शिक्षा |
| गौ.शि | गौतमी शिक्षा |
| चा.शि | चारायणी शिक्षा |
| जै.न्या.वि | जैमिनीयन्यायमालाविवरणप्रकाशिका |
| जै.सू | जैमिनीयसूत्रम् |
| तं.वा | तन्त्रवार्तिकम् |
| त्रि | त्रिभाष्यरत्नम् |
| तै.आ | तैत्तिरीय आरण्यकम् |
| अ.प्रा | अथर्ववेदप्रातिशाख्यम् |
| अ.भा | अनन्तभट्टभाष्यम् |
| आ.ब्रा | आर्षेयब्राह्मणम् |
| आपि.शि | आपिशल शिक्षा |
| ऋ.प्रा.वि.वि | ऋक्प्रातिशाख्य विष्णुद्धयवर्गवृत्तिः |
| ऋ.भा.भू | ऋग्वेदभाष्यभूमिका |
| ऐ.ब्रा | ऐतरेयब्राह्मणम् |

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



| | |
|---|---|
| का.प | कातन्त्रपरिशिष्टम् |
| गो.ब्रा | गोपथब्राह्मणम् |
| च.अ | चतुरध्यायिका |
| चा.व्या | चान्द्रव्याकरणम् |
| छा.उ | छान्दोग्योपनिषद् |
| जै.व्या | जैनेन्द्रव्याकरणम् |
| जै.व्या | जैमिनीयब्राह्मणम् |
| ता.ब्रा | ताण्ड्यब्राह्मणम् |
| तु.सू | तुलनात्मकं सूत्रम् |
| तै.प्रा | तैत्तिरीयप्रातिशाख्यम् |
| तै.ब्रा | तैत्तिरीयब्राह्मणम् |
| धा.पा | धातुपाठः |
| ना.शि | नारदीयशिक्षा |
| पा.शि | पाणिनीयशिक्षा |
| पारि.शि | पारिशिक्षा |
| पु.सू | पुष्पसूत्रम् |
| बृ.दे | बृहद्देवता |
| म.भा | महाभाष्यम् |
| मा.भा | माहिषेयभाष्यम् |
| मु.उ | मुण्डकोपनिषत् |
| या.शि | याज्ञवल्क्यशिक्षा |
| लो.शि | लोमशी शिक्षा |
| वै.आ | वैदिकाभरणभाष्यम् |
| श.ब्रा | शतपथब्राह्मणम् |
| शौ.शि | शौनकशिक्षा |
| सं.व्या | संक्षिप्तसारव्याकरणम् |

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



| | |
|---|---|
| तै.सं | तैत्तिरीयसंहिता |
| ना.शा | नाट्यशास्त्रम् |
| नि. | निरुक्तम् |
| प.पा | पदपाठः |
| पा.सू | पाणिनीयसूत्रम् |
| पारा.शि | पाराशरशिक्षा |
| प्रयो.व्या | प्रयोगव्याकरणम् |
| महा.भा | महाभारत |
| मा.शि | माण्डुकी शिक्षा |
| मुग्ध.व्या | मुग्धबोधव्याकरणम् |
| हेम | हेमचन्द्र शब्दानुशासनम् |
| सा.तं | सामतन्त्रम् |
| सा.सर्वा | सामवेदसर्वानुक्रमणिका |
| हरिना.व्या | हरिनामामृतव्याकरणम् |

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



# ऋक्तन्त्रस्य मूलपाठः

## प्रथमः खण्डः

अथ वाचोवृत्तिं व्याख्यास्यामः । वायुं प्रकृतिमाचार्याः। वायुः मूर्च्छन्छ्वासी भवति। श्वासो नाद इति शाकटायनः। वायुरेवास्मिन् काये मूर्च्छत्यटतीत्येषोऽर्थः। स खलु खविशेषं प्रतिपन्नः कण्ठं प्रतिपन्नः श्वसितिर्भवति।सा श्वसितिः शिरः प्रतिपन्नः आकाशमद्धारकं नदतिर्भवति। तस्येदानीं नदतेर्जिह्वाग्रेणेर्यमाणस्य व्यक्तयः प्रादुर्भवन्ति वर्णानामोष्ठ्याः कण्ठ्यास्तालव्याः मूर्धन्या दन्त्या नासिक्या जिह्वामूलीया इति ।

तद्यथा त्रपुकारः त्रपुविलाप्य बिम्बे निषिञ्चेद्यं यं बिम्बदेशं तत् त्रपु निषिच्यते ततस्ततो द्रव्याणां व्यक्तिर्भवति। काञ्चिमणिः के-रुचिकः स्वस्तिक इति। एवं यं यम् अयं खविशेषं जिह्वाग्रेण स्पृशति ततस्ततो वर्णानां व्यक्तिर्भवत्योष्ठ्यानां कण्ठ्यानां तालव्यानां मूर्धन्यानां दन्त्यानां नासिक्यानां जिह्वामूलीयानामिति। एवमुत्पन्नानां वर्णानां उपदेशोद्देशाः। उद्देशः संज्ञाकरणम्। उपदेशे प्रत्याहारः। सिद्धवद्वा । यथाऽध्वर्युः उपदेशं वक्ष्यामः। अथ वर्णाः संज्ञाः प्रत्याहारसमाः ॥1॥

## द्वितीयः खण्डः

अ इति आ इति इ इति ई इति उ इति ऊ इति ऋ इति ॠ इति लृ इति लॄ इति समानानि। ए इति ऐ इति ओ इति औ इति सन्ध्यक्षराणि । आयाहीवोयीनां गतिरन्त इति स्वराः।

अथ व्यञ्जनानि- किति खिति गिति घिति ङिति कवर्गः।
चिति छिति जिति झिति ञिति चवर्गः।
टिति ठिति डिति ढिति णिति टवर्गः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तिति थिति दिति धिति निति तवर्गः।

पिति फिति बिति भिति मिति पवर्गः। इति स्पर्शाः।

अथाऽन्तस्थाः । यिति रिति लिति वित्यन्तस्थाः। अथोष्माणो हिति शिति षिति सिति योगवाहाः। अथायोगवाहाः अः इति विसर्जनीयः। ᳵक इति जिह्वामूलीयः। ᳵप इत्युपाध्मानीयः। हुमित्यनुनासिक्यः। अथ यमाः। कुमिति खुमिति गुमिति घुमिति यमाः। अनन्त्यान्त्यसंयोगे मध्ये यमः। पूर्वगुणो वा । अथानुस्वारौ । अं आं इत्यनुस्वारौ ॥ 2॥

## तृतीयः खण्डः

ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः। वर्णात्कारः, वर्णात्-कारः प्रयोक्तव्यः। कारादाख्यायां व्यञ्जनमकारश्च पूर्वाद्वा । रात्फः, रेफ इति। स्पृष्टं करणं स्पर्शानाम् । दुस्पृष्टमन्तस्थानाम् । विवृतं स्वरोष्मणाम्। विवृततरमकारैकारौकाराणाम्। संवृतो घोषवान्। विवृतोऽघोषो नादाऽनुप्रदानाः स्वरघोषवन्तः श्वासोऽघोषाणाम्। तनीयान् प्रथमानामुभौ ह चतुर्थानां सन्निवेशोऽन्यः। प्रत्याहाराऽर्थो वर्णोऽनुबन्धो व्यञ्जनं यावतिथस्तावतां तदादीनां ततः पराणाम् ॥ 3 ॥

## चतुर्थः खण्डः

ए ओ ऐ औ आ ॠ ॡ ई ऊ ऋ ऌ इ उ आः। र य व लाः । ङ ञ ण न माः। घ झ ढ ध भाः। ग ज ड द बाः। ख छ ठ थ फाः। क च ट त पाः। ह श ष साः। अः ᳵ क ᳵपाः । हुं कुं खुं गुं घुं अं आम् एवमुपदेशे स्वराणां सन्ध्यक्षराणां दीर्घाणां ह्रस्वानां समानानामन्तस्थानामुत्तमानां स्वरान्तस्थोत्तमानामकारघोषाणां हकारस्तु घोषवतामघोषाणां सोष्मणामूष्मणाञ्च। प्रत्याहारेरहयोर्वर्गसंज्ञानुस्थानानामसिद्धिरिति चेत् ह्रस्वतरं नासिक्यस्थानेषु मात्राकरणं विशिष्टानामपि प्राप्ति-

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्तथासिद्धमिति। इदमक्षरं छन्दोवर्णशः समनुक्रान्तम्। यथाचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्यः ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते। न भुक्त्वा न नक्तं प्रब्रूयात् ब्रह्मराशिरिति च ब्रह्मराशिरिति च॥ 4॥

।।इति प्रथमः प्रपाठकः।।

-------

01. मासे यथा दृष्टः।।प्र.2।।
02. हाः कण्ठे
03. उरसि विसर्जनीयो वा
04. जिह्वा मूले ᳵकृ
05. तालुनि श्च्ये
06. मूर्धनि षटौ
07. दन्ते त्स्लाः
08. रेफो मूले वा
09. ओष्ठे वोः पू
10.किट् किडाकारो हन्वाम्
11.अविशेषस्थानौ संस्वादनिगारौ
12.नासिकायां यमानुस्वारनासिक्याः
13. स्पर्शे गस्य
14. उत्तमा घोषाः
15. हान्तस्थाः
16. युग्मास्सोष्माणः
17. अन्त्योऽनुनासिकः
18.साक्षरः पदान्तोऽवसितः
19. येकवचने
20. व्यञ्जनं पूर्वस्यान्तस्वरम्
21. अभिनिधानः
22. व्यञ्जने
23. अनुस्वारौ च
24. र्लावव्यपरौ
25. स्पर्शः स्वे
26. रादिरमन्यत्
27. सयुक्सण्
28. मात्रार्धमात्रा वा
29. गतिश्च त्रिकला वा
30. सन्ध्याद्यश्च
31. द्रुतायां मात्रा
32. चतुष्कला मध्यमायाम्
33.पञ्चकला विलम्बितायाम्
34. वर्णान्तरं परमाणु
35.स्वरयोरर्धमात्रा
36. विरामे मात्रा
37.नित्यविरते द्विमात्रम्
38. गाथासु

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



39. त्रिमात्रं सामसु
40. अकालो ह्रस्वः
41. अर्धमणु
42. मात्रा
43. द्वे दीर्घम्
44. तिस्रो वृद्धम्
45. वैस्वर्ये स्वरास्त्रिमात्राः
46. अक्षरम्
47. वर्ति
48. भूयान्
49. गुरु सणि
50. घम्
51. उदात्तमुत्
52. वान् सन्धिः
53. आद्यार्धमात्रा स्वरितम्
54. उन्नीचे मे
55. नीचमुच्चात्
56. संयोगात्
57. क्वेयहीन्द्रनीवेति
58. तो र्धे स्तेम्
59. नैगिनोभयथा
60. न्यायेनौदव्रजिः
61. तस्मादुच्च श्रुतीनि ।।प्र.3
62. पदमेकोच्चम्
63. प्रकृतिः
64. मान्विकारः
65. समासे
66. विभक्तिलोपः
67. सन्निकर्षः संहिता
68. न वृद्धं रे
69. द मु
70. ओभूतञ्च
71. आऽऽणि
72. न वन्वा च
73. औ
74. द्व्यर्थे
75. ई न वपरे
76. अयवावे न्यूने
77. त्रोऽणि
78. नृतो प वोङ्गि
79. गो
80. न वा
81. अवं वा
82. त्वे
83. लुबन्यः
84. पूर्ण इति करणाभ्यस्ते
85. ऋति
86. ओजि
87. शकन्धुकादीनाम्
88. कि इन् वी उत्
89. स्मिन् व्र ज्मन् यम्
90. महुं युक्

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



91. विकारः
92. सस्थानः
93. रौ घम्
94. अस्थनामिनी सन्ध्यम्
95. सन्ध्यं द्विवर्णम्
96. भाषायां णी परयोः
97. उपसर्गादूहेष्यौप्रेष्यार्थे
98. सन्ध्ये परं सामर्थ्ये
99. समासे
100. न वा
101. ह्रस्वमृचि
102. ऋमप्येके
103. मासे घमृति
104. मक्रियायाम्
105. उपसर्गः सामर्थ्ये
106. वत्सतरादीनामृणि
107. रमृस्थमस्वे
108. ह्रस्वमेके
109. अन्तस्थाम्
110. तिः
111. सन्ध्यमयवायावम्
112. घान्नोऽडि विसर्जनीयं यवोहिषु
113. घाद्ग्रा
114. आ रक्तः
115. रं विसर्जनीयो घोषे
116. र प्रकृतिः
117. अस्थाद्यम्
118. ओम् अः
119. रे
120. नौ
121. तो षि
122. हो रा स्वो रु
123. राजने च
124. उभयथाभुवोम्नः ऊधरवः
125. सप्रकृतिर्मासे सं कृकमोः
126. यश्चातिशये
127. अङ्गे च कम्व्यादौ
128. कौतस्कुतादीनाम्
129. पर्वणि सद्यस्काला
130. नामिनोऽघोषे सामर्थ्ये
131. मिथुनाख्ये वा
132. विग्रहे च
133. निः
134. दुः
135. असुखे खे
136. ख्यातौ च
137. द्विः
138. त्रिः
139. चतुः
140. बहिः।।इति.प्र.3।।
141. आविरादीनां करोतौ।।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रप्राठकः- 4

142. पुरः
143. अडि
144. इव ऋ
145. रि खिडि
146. पि
147. ठ्यदन्त्यपरे
148. घेऽणः
149. यः
150. भे स्वे मान्तस्थि
151. नोष्मपरे
152. पुं स्पर्शे
153. नो मध्यमवर्गे
154. ऋक् चे
155. कान् त्स्वे
156. लुबुदेषसस्य व्यञ्जने
157. नान् पूर्वः
158. यः
159. रमध्ये
160. वमेके
161. अर्ध वा
162. वं नैगिरुस्थे
163. नोक्तः(नो तौ)
164. अत्पटादीनामितौ
165. दोऽभ्यासे
166. पृषोदरादीनाम्
167. उदस्थास्तम्भोः
168. तुल्ये
169. रात्स्थाजरे
170. रः
171. सोष्मण ऊष्मा
172. तृतीयः परगुणम्
173. अन्त्ये
174. दन्त्याच्छश्छम्
175. वमोदयमेके
176. तृतीयाद्धश्चतुर्थम्
177. ऊष्मा स्थानम्
178. दन्त्यं मध्यमवर्गे
179. श्लोः
180. मो सन्ध्यः
181. रणमपि स्थायाम्
182. अनुस्वारमेके
183. रेफोष्मसु
184. हि नमपरे च तत्परम्
185. व्यवधानोऽन्त्यविकारे
186. अन्त्यात्प्रथमोऽघोषे
187. नात्सि
188. टान्तमेके
189. स सं करोतौ
190. अङ्गव्यवाये चाङ्गपरः
191. कृचकारमस्वयं दृष्टे
192. पर्युपभूषण प्राचुर्य वाक्येषु

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



193. अवमर्यादावर्च्चस्कयोः
194. पार पर्वते
195. अप रथे
196. किरतावध्यात्मम्
197. उपप्रति हिंसायाम्
198. वि शकुनौ
199. कुस्तुम्बुरुजातिः
200. आस्पदमास्थायाम्
201. अपरस्परं सातत्ये
202. प्रस्कण्व ऋषिः
203. गोष्पदमुदकमाने
204. अगोष्पदमनाचरिते
205. आश्चर्यमनित्ये
206. आस्क्रा आस्क्रभो विस्फुलिङ्गाः
207. समासऋक्षु चन्द्रे
208. कास्तीराजस्तुन्दे नगरे
209. नदी रथस्या
210. मस्करो वेणुः
211. तस्करस्तेनः
212. दीर्घ भाषायां प्राप-वृणोतौ संवरणे
213. अच्छ वदतौ
214. समासे गिरौ पेषुण गोप वत्सकयवाञ्जनभञ्जनानाम्

।।अथ पञ्चमप्रपाठकः।।



215. कर्णस्य श्रृङ्गे
216. वृषस्य कपि मोदिनीदर्भ रवेषु
217. कर्णे प्लीहाङ्कुश कुण्डलो -परिष्टांध्यक्षत बाणानाम्
218. विश्वस्य नरवसु राट्सु
219. मित्र ऋषौ
220. श्ववित्पदवराहकर्णदन्त दंष्ट्रेष्वसम्प्रति चेत्
221. सर्वनाम्नो दृशि
222. उक्ष वेहति
223. उप नखे
224. साङ्गे च समागमे
225. अष्ट
226. प्राक् शतात्
227. पदगोयुक्त दन्तशालीये च तीर्थे
228. नाम्नां षाडि
229. वने त्र्यक्षरप्रभृतीनां प्राच्य भरतसंज्ञा चेत्
230. उपसर्गस्य धातावेकाक्षरे नामभूते
231. द्व्यक्षरे गुर्वादावकाराङ्गे
232. प्रदन्त्यादौसादसूदसङ्गसेनेषु
233. न सत्वभावे लुडिते च
234. निष्ठायामित् तादौ
235. उ च काशे दर्शने

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



236. युग्मं घु
237. उ घोर्घुनि घोषादिः
238. इ
239. सोष्मि दन्त्ये क्षे
240. कण्ठ्ये
241. व्यादेः
242. क्षमवि
243. तृतीयम्
244. यतौ
245. ष्मिणोद्धिवतः
246. णि
247. नीचस्य खु प्रथमे
248. मः
249. तम्
250. इमम्
251. तेः
252. अञुस्त्य
253. वा इ वर्त्तनिः
254. यमः
255. प्राचु सोष्मणि
256. अरस्य
257. रसन्धिः
258. उपसर्गः
259. द्य
260. मि तृतीयी
261. अनुषगादिः
262. अवोह्रस्वात्
263. पुरुषः
264. द्विः स्पर्शोरेऽन्त्यः
265. अप्रतिषेधे
266. हुम्
267. छः
268. माऽऽभ्याम्
269. रात्सण्
270. रं ह्लात्
271. ऊष्मा व्यञ्जने
272. दे नो मूर्धन्यम्
273. ऋषाभ्याम्
274. नो व
275. नमध्यमवर्गीयैर्व्यवेतं लशसैश्च
276. क्राभ्यां सो वैभक्तः
277. ऊगि
278. अन्ताक्षरात्
279. उपसर्गात्
280. रान्म्णसु
281. उद आद्ये
282. क्षाज्जागते
283. सन्ध्यः
284. दन्त्ये स्पर्शे
285. द्विवति परे
286. षाद्दन्त्यः

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ॐ नमः सामवेदाय

॥ अथ प्रथमप्रपाठकः॥

**1. अथ वाचोवृत्तिं व्याख्यास्यामः ॥**

विवरणम्- अथ शब्दः मङ्गलार्थः। वाचः वचनस्य, वृत्तिं प्रवृत्तिं व्याख्यास्यामः।

सू.अ - अब वाणी की निष्पत्ति का व्याख्यान प्रारम्भ किया जाएगा।

विशेषः - मङ्गलानन्तरारम्भप्रश्नकात्स्नेष्वथो अथ। इति मङ्गलाद्यनेकार्थत्वात् अथ शब्दस्य प्रथमं तावन्मङ्गलार्थत्वमुच्यते, तस्य प्रणवसाधर्म्यात् । तथा च समाचक्षते शिक्षाकाराः - ओङ्कारश्चाथशब्दश्च मङ्गलाविति कीर्तितौ इति । आहोस्वित् - आनन्तर्यार्थता वेदाध्ययनानन्तरं लक्षणज्ञानं कुर्यादिति सापेक्षत्वात् लक्षणस्य, पूर्व वेदाधिगमे सत्यथ लक्षणपरीक्षाऽवसरः। अथवा अधिकारार्थः अथशब्दः, त्वथैवेति विनिवर्तकाऽधिकारकाऽवधारकाः इति वक्ष्यमाणत्वात्। सोऽयं मङ्गलार्थः पुनः प्रयुज्यते। यथा नः स्वस्ति च स्यात् । साधु चाध्ययनं संवृतं त्वाचार्यशिष्ययोरिति। छान्दोग्योपनिषदि उक्तम् - अथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक् तस्मादप्राणन्नपानन् वाचमभिव्याहरति (छा.उ,1.3.3)

**2. वायुं प्रकृतिमाचार्याः।।**

वि - गोभिलादयः आचार्याः वाचः प्रकृतिं वायुं वदन्ति।

सू.अ - वायु ध्वनिनिष्पत्ति का मूल है ऐसा आचार्यो का मत है।

कथं प्रकृतिरिति ? आह-

विशेषः - आचार्य आचारं ग्राहयति, आचिनोति अर्थान्, आचिनोति बुध्दिं इति वा (नि.1.4)। आचार्याचारात् संज्ञासिद्धिः। आचार्याचारात् संज्ञासिद्धिः भविष्यति (म.भा,1.1.3, मनुस्मृतिः 12.11.13 इत्यादि)।।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



**3. वायुः मूर्च्छन् छ्वासी भवति॥**

वि- वायुः शरीरे मूर्च्छन् अटन्, भ्रमन् श्वासी भवति, श्वासो भवति।

सू.अ - वायु मूर्च्छित होकर श्वास हो जाती है।

विशेषः- विवृत्त अवस्थायां निःसृतवायुः श्वासोच्यते। अस्यामवस्थायां अघोषध्वनिनामुच्चारणं भवति(ऋ.प्रा,13.1.4)। विवृते कण्ठे यः शब्दः क्रियते सा श्वाससंज्ञो भवति। श्वासो नाम बाह्यप्रयत्नः जायते इति शिक्षायां स्मर्यते (तै.प्रा, 2.5.10)।।

**4. श्वासो नाद इति शाकटायनः॥**

वि - श्वासो नाद इति पर्यायः। एवं शाकटायन आचार्य आह।

सू.अ - श्वास नाद हो जाता है यह शाकटायन का मत है।

विशेषः - नादलक्षणमाह-संवृते कण्ठे यः शब्दः क्रियते सः नादसंज्ञो भवति।।

**5. वायुरेवास्मिन् काये मूर्च्छति अटतीत्येषोऽर्थः॥**

वि - अयं श्वाससंज्ञकः वायुः अस्मिन् काये शरीरे मूर्च्छति अटति भ्रमतीति वायुर्मूर्च्छन्छ्वासी भवतीति पूर्वसूत्रस्यार्थः।

सू.अ - वायु इस शरीर में परिभ्रमण करती है इसका यह आशय है।

इदानीं श्वासोत्पत्तिमाह-

**6. स खलु खविशेषं प्रतिपन्नः कण्ठं प्रतिपन्नः श्वसितिर्भवति॥**

वि - खल्विति निश्चये। स वायुः खविशेषं शरीरे आकाशविशेषं प्रतिपन्नः प्राप्तः, ततः कण्ठं प्रतिपन्नः, ततः श्वसितिः श्वासो भवति।

सू.अ - यह वायु मुख और कण्ठ से संयुक्त होकर श्वास हो जाता है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इदानीं नादस्योत्पत्तिमाह-

**7. सा श्वसितिः शिरः प्रतिपन्नः आकाशमद्वारकं नदतिर्भवति॥**

वि - सा पूर्वोक्ता श्वसितिः श्वासः शिरः प्रतिपन्नः प्राप्तः, ततः आकाशमद्वारकं द्वाररहितं शिरः प्राप्य नदतिः नादो भवति।

सू.अ - यह श्वास शिर से संयुक्त आकाशमान् कण्ठविवर में अवरुद्ध होकर नाद हो जाता है।

**8. तस्येदानीं नदतेर्जिह्वाग्रेणेर्यमाणस्य व्यक्तयः प्रादुर्भवन्ति वर्णानामोष्ठ्याः कण्ठ्यास्तालव्याः मूर्धन्या दन्त्या नासिक्या जिह्वामूलीया इति॥**

वि- इदानीं अधुनास्य पूर्वोक्तस्य नदतेः नादस्य जिह्वाग्रेणेर्यमाणस्य ओष्ठ्यादिकं प्रेर्यमाणस्य वर्णानां ओष्ठ्यादीनां व्यक्तयः स्वरूपाणि प्रादुर्भवन्ति, प्रकटी भवन्ति। नादः ओष्ठं कण्ठं तालु मूर्धानं नासिकां जिह्वामूलं च प्रेरयति। जिह्वाग्रेण तत्तद्वर्णानां व्यक्तयः स्वरूपाणि प्रकटीभवन्तीत्यर्थः । ओष्ठ्यादीनां स्थानानां वर्णानाह। ओष्ठ्या ओष्ठस्थानभवाः । उपूपध्मानीयानां ओष्ठौ स्थानम् । कण्ठ्याः- कण्ठस्थाने भवाः। अकुहविसर्जनीयानां कण्ठस्थानम्। तालव्याः- तालुस्थाने भवाः । इचुयशानां तालु। मूर्धन्याः- मूर्धनि भवाः। ऋटुरषाणां मूर्धास्थानम् । दन्त्याः- दन्तस्थाने भवाः । लृतुलसानां दन्तस्थानम्। नासिक्याः - नासिकास्थाने भवाः । अनुस्वारस्य नासिकास्थानम् । ञमङणनानां नासिका च । जिह्वामूलीयाः। जिह्वामूले भवाः। जिह्वामूले ≍ कृ । क ऋकार ॠकाराः॥

सू.अ - यह नाद जिह्वाग्र से विभिन्न उच्चारणस्थलों पर अवरुद्ध होती हुई ओष्ठ्य, कण्ठ्य, तालव्य, मूर्धन्य, दन्त्य, नासिक्य, जिह्वामूलीय वर्णों को प्रादुर्भूत करती है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



**9.तद्यथा त्रपुकारः त्रपु विलाप्य बिम्बे निषिञ्चेद्यं यं बिम्बदेशं तत् त्रपु निषिच्यते ततस्ततो द्रव्याणां व्यक्तिर्भवति। काञ्चिमणिः केरुचिकः स्वस्तिक इति॥**

वि - यथा येन प्रकारेण तस्य पूर्वोक्तस्य उदाहरणमुच्यते। त्रपुकारः रङ्गकारः, त्रपु रङ्गं विलाप्य गालयित्वा बिम्बे निषिञ्चेत्। सिञ्चति यं यं बिम्बदेशं तद्गालितं त्रपु निषिच्यते। ततः तस्य तस्य बिम्बदेशस्य द्रव्याणामाभरणानां व्यक्तिः स्वरूपं भवति।काञ्चिमणिः क्षुद्रघण्टिका। केरुचिकः मस्तकाभरणं स्वस्तिकः त्रपुमणिः॥

सू.अ- जिस प्रकार त्रपुकार द्रवित रङ्ग को काञ्चनमणि, रुचिक, स्वस्तिक, आदि आभूषणों के बिम्ब(साञ्चा) में उसका आधान करता है। उसी में उसकी अभिव्यक्ति होती है।

**10. एवं यं यं अयं खविशेषं जिह्वाग्रेण स्पृशति। ततस्ततो वर्णानां व्यक्तिर्भवति। ओष्ठ्यानां कण्ठ्यानां तालव्यानां मूर्धन्यानां दन्त्यानां नासिक्यानां जिह्वामूलीयानामिति॥**

वि - एवं अनेन प्रकारेण अयं नादः खविशेषं आकाशविशेषं ओष्ठ्यादिकं जिह्वाग्रेण स्पृशति। ततस्ततः तस्य तस्य ओष्ठ्यादिकस्य वर्णानां व्यक्तिः स्वरूपं भवति। एवं कण्ठ्यानां तालव्यानां मूर्धन्यानां नासिक्यानां जिह्वामूलीयानाम्॥

सू.अ- उसी प्रकार यह कण्ठविवर जिस जिस स्थानविशेष पर जिह्वाग्र से स्पर्श किया जाता है तदनुरुप ओष्ठ्य, कण्ठ्य तालव्य मूर्धन्य दन्त्य नासिक्य जिह्वामूलीय वर्णो की अभिव्यक्ति होती है।

**11. एवमुत्पन्नानां वर्णानां उपदेशोद्देशाः॥**

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वि - एवं पूर्वोक्तेन प्रकारेणोत्पन्नानां ओष्ठ्यादीनां वर्णानामुपदेशा उद्देशाः ज्ञातव्याः। ऐ इत्यादयो अं औ इत्यन्ताः उद्देशाः ज्ञातव्याः। ए ओ ऐ औ इत्यादयो अं आँ इत्यन्ता उपदेशाः ज्ञातव्याः।।

सू.अ - इस प्रकार उद्भूत वर्णों को उपदेश और उद्देश इन दो भागों में विभक्त किया जाता है।

**12. उद्देशः संज्ञाकरणम्॥**

वि - ऐ इत्याद्युद्देशवर्णानां संज्ञाकरणम् । नामानि कृतानि॥
सू.अ - उद्देश संज्ञाकरण की सिद्धि होती है।

**13. उपदेशे प्रत्याहारः॥**

वि - ए ओ ऐ औ इत्याद्युपदेशे उद्देश स्वरादीनां प्रत्याहारः आहरणं कृतम्॥
सू.अ - उपदेश से प्रत्याहार का सिद्धि होती है।

**14. सिद्धवद्वा ॥**

वि- अथवा सिद्धवद्ग्रहणं कृतम्। नाहरणं कृतम्॥
सू.अ - सिद्धि होती है विकल्प से।

**15. यथाऽध्वर्युः, उपदेशं वक्ष्यामः॥**

वि - यथा येन प्रकारेण स्वरादीनामुपदेशः, तथा तेन प्रकारेण उपदेशं वक्ष्यामः। अध्वर्युऋत्विग्यथोपदेशं कर्म करोति तद्वत्।

सू.अ - जैसे अध्वर्यु को उपदेश दिया जाएगा।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



**16. अथ वर्णाः संज्ञाः प्रत्याहारसमाः॥**

वि - अथ शब्दः उद्देशस्य स्मरणार्थः। उद्देशे अकारादयो वर्णा उच्यन्ते। उद्देशे संज्ञानामानि वर्णानां उपदेशे प्रत्याहाराणां समाः समाना वर्णा उच्यन्ते॥1॥

सू.अ - अब वर्णों का संज्ञा और प्रत्याहार पूर्वक विवेचन किया जा रहा है।

इति ऋक्तन्त्रभाष्ये ब्रह्मराशौ प्रथमखण्डः

0-----ॐ-----0

## ।। द्वितीयखण्डः ।।

(संमानाक्षरसंज्ञाविधानम्)

**अ इति आ इति इ इति ई इति उ इति ऊ इति ऋ इति ॠ इति समानानि।**

सू.अ - अ, आ, इ, ई, उ, ऊ, ऋ एवं ॠ समानाक्षर है।

विशेषः - एकारादयस्स्वराः सन्ध्यक्षराणीत्याख्यायन्ते स्वरद्वयसन्धि-रूपत्वात्। तदभावात्तु समानरूपाः अकारादय इतरे स्वराः समानाक्षराणीति (तै.प्रा,1.2 वै.अ)। समानं तुल्यं मानं परिमाणं परिच्छेदो वा एषां ते समानाः, परस्परविलक्षणाकारं विभागा अपि (हेम,1.1.1, 8 लघुन्यासे)। अकारादय लृदन्ताः समानाः स्युरकश्च ते (प्रयो.व्या,1.8)।

(सन्ध्यक्षरविधानम्)

**ए इति ऐ इति ओ इति औ इति सन्ध्यक्षराणि।**

सू.अ - ए, ऐ,ओ,औ यह सन्ध्यक्षर है।

विशेषः - अकारस्य इकारेण उकारेण एकारेण ओकारेण च सन्धौ यान्यक्षराणि निष्पद्यन्ते तानि तथोच्यन्ते (ऋ.प्रा,1.2 उ भा)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सन्ध्यक्षरेषु सत्सु अकारः पूर्वमर्धं भवति, उकार उत्तरमर्धं प्रथमतृतीययोर्भवति। द्वितीयचतुर्थयोः उकार उत्तमरमर्धं भवति। एवं शाकटायन आचार्यो मन्यते (13.39 उ.भा)। कण्ठतालुस्थानता कण्ठोष्ठस्थानता च लक्ष्यत एतेषु उभयेषु सन्ध्यक्षरेषु कण्ठतालव्ययोः कण्ठ्योष्ठ्योश्च ए ओ ऐ औ इति (ऋ.प्रा,13.38 उ.भा) सन्धौ सति अक्षरं सन्ध्यक्षरम्। तथाहि अवर्णस्य इवर्णेन सह सन्धावेकारः, एकारैकाराभ्यामैकारः, अवर्णस्य उवर्णेन ओकारः, ओकारौकाराभ्यामौकारः (हेम.1.1.8 लघुन्यासः)। एकारादयः स्वराः सन्ध्यक्षराणीत्याख्यायन्ते स्वरद्वयसन्धिरूपत्वात् (तै.प्रा, 1.2. वै.आ )। सन्ध्यक्षराण्यन्वर्था पूर्वाचार्य संज्ञा संधीयमानावयवत्वात् (म.भा, 1.1.2 प्रदीपे) । अथ सन्ध्यक्षराणि। ए इति ऐ3 इति। ओ इति ओ3 इति। ऐ इति ऐ3 इति । औ इति औ3 इति (वा.प्रा,8.8.12)। सन्धावुच्चारणीयान्यक्षराणि सन्ध्यक्षराणि। ए ऐ च कण्ठतालव्या ओ औ कण्ठोष्ठजौ स्मृतौ इत्युक्तेः (पयो.व्या, 1.18 प्रभाप्रकाशिका)

(स्वरसंज्ञाविधानम्)

**आयाही वोयीनां गतिरन्त इति स्वराः।**

विशेषः - स्वर्यन्ते शब्द्यन्त इति स्वराः (ऋ.प्रा.1.3 उवट भाष्ये), स्वयं राजन्ते नान्येन व्यज्ञन्त इति स्वराः (तै.प्रा.9.5 वै.भा), स्वरा इति स्वृ शब्दोपतापयोः करणे च् प्रत्ययः (पा।.शि.4 पञ्जिकाभाष्ये), अन्वर्थ खल्वपि निर्वचनं स्वयं राजन्ते स्वराः (पा.सू.1.2.29 3 मा.भा), यस्स्वयं राजते तं तु स्वरमाह पतञ्जलिः। उपरिस्थायिना येन व्यङ्ग्यं व्यञ्जनमुच्यते (तै.प्रा. 9.5 वै.भा)।

सू.अ - आयाहीवोयीनां पदों में सामगान की गति में अन्त होने वाले भी स्वर है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(व्यञ्जनसंज्ञाविधानम्)

## अथ व्यञ्जनानि ।

विशेषः - ऋक्प्रातिशाख्ये व्यञ्जयन्ति प्रकटान् कुर्वन्ति अर्थानिति व्यञ्जनानि इति (ऋ.प्रा,1.6 उ.भा)। तैत्तिरीयप्रातिशाख्यभाष्ये परेण स्वरेण व्यञ्जत इति व्यञ्जनम् (तै.प्रा, 1.6 वै.आ)। व्यञ्जयन्त एभिरिति व्यञ्जनानि, स्वराणामर्थप्रतिपादकोपकाराणि यथा सूपादीन्योदनस्येति (का.व्या,1.1.9 परपजी) । अन्तरेणापि व्यञ्जनमचः एवैते (उदात्तात्वादयः) गुणा लक्ष्यन्ते, न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति (पा.सू,1.2.29म.भा,कैयट एवं प्रदीपः)। व्यञ्जनानि पुनर्नटभार्यावद् भवन्ति। तद्यथा नटानां स्त्रियो रङ्गं गता यो यः पृच्छति कस्य यूयम् । कस्य यूयम्। इति तं तं तव तवेत्याहुः। एवं व्यञ्जनान्यपि यस्य यस्याचः कार्यमुच्यन्ते तं तं भजन्ते (पा.सू, 6.1.2)।

मणिवत्व्यञ्जनान्याहुः सूत्रवत्स्वर इष्यते।<br>
व्यञ्जनान्यनुवर्तन्ते तेन व्यङ्ग्यं व्यञ्जनमुच्यते॥<br>
दुर्बलस्य यथा राष्ट्रं हरते बलवान्नृपः।<br>
दुर्बलं व्यञ्जनं तद्वत् हरते बलवान् स्वरः॥ (मा.शि, 30,111)

अञ्जतेरञ्जनम्। अञ्जनं प्रकाशनम्। अङ्क्ते क्षिणी इत्युच्यते। यत्तत् सितं चासितं चैतत् प्रकाशयति। तथाऽञ्जेर्व्यञ्जनम्। व्यञ्जनं च प्रकाशनम्। ...अन्वर्थं खल्वपि निर्वचनम्- व्यज्यतेऽनेनेति व्यञ्जनम् इति (पा.सू, 8.2.48 म.भा)॥

सू.अ - अब व्यञ्जन आते है।

(वर्गसंज्ञाविधानम्)

### किति खिति गिति घिति ङिति कवर्गः।

सू.अ - क, ख, ग, घ, ङ कवर्ग है।

### चिति छिति जिति झिति ञिति चवर्गः।

सू.अ - च, छ, ज, झ, ञ चवर्ग है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



**टिति ठिति डिति ढिति णिति टवर्गः।**

सू.अ - ट, ठ, ड, ढ, ण टवर्ग है।

**तिति थिति दिति धिति निति तवर्गः।**

सू.अ - त, थ, द, ध, न तवर्ग है।

**पिति फिति बिति भिति मिति पवर्गः।**

सू.अ - प, फ, ब, भ, म पवर्ग है।

**इति स्पर्शाः।**

सू.अ - ये स्पर्श वर्ण कहे जाते है।

विशेषः- स्पृष्टप्रयत्नजन्यत्वात् स्पर्शा इत्याख्यायन्ते (तै.प्रा,1.7 वै.आ)

(अन्तस्थसंज्ञाविधानम्)

**अथाऽन्तस्थाः।**

सू.अ - अब अन्तस्था आते है।

विशेषः- स्पर्शोष्मणामन्तर्मध्ये तिष्ठन्तीत्यन्तःस्थाः (ऋ.प्रा,1.9 उ.भा)। जिह्वामध्यप्रभृतीनां करणानामन्तैर्जन्यत्वाद्यरलवा अन्तस्था इति आख्यायन्ते (तै.प्रा, 1.8 वै.आ)। स्वस्य स्वस्य स्थानस्यान्ते तिष्ठन्तीति अन्तस्था उच्यन्ते । यकारस्तालव्यः, रेफो मूर्धन्यः, लकारो दन्त्यः, वकारो दन्त्योष्ठ्यः (का.व्या, 1.8 पञ्जी)। यकारादीनां स्वस्थानानि ताल्वादीनि तदन्ते वसाने शेषावयवे तिष्ठन्तीत्येतदेवाह (का.व्या, 1.1.14 कविराजः)।

**यिति रिति लिति विति अन्तस्थाः।**

सू.अ - य, र, ल, व अन्तस्था है।

(उष्मसंज्ञाविधानम्)

**अथोष्माणः।**

सू.अ - इसका बाद उष्मवर्ण आते है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विशेषः- ऊष्मा वायुस्तत्प्रधानवर्णा ऊष्माणः (ऋ.प्रा, 1.10 उ.भा)। ऊष्मधर्मयोगाद् ऊष्माण इहोच्यते (का.व्या, 1.5 दुर्गः)। ऊष्मधर्म-योगादिति। उच्चारणे यो मुखं तपति स एवोष्मधर्मः (का.व्या, 1.1.5 पञ्जी)। शिट् संज्ञकाः श ष स हा एत एवोष्मसंज्ञकाः (प्रयो.व्या, 1.27)

**हिति शिति षिति सिति योगवाहाः।**

सू.अ - ह, श, ष, स ऊष्म है। उपर्युक्त सभी वर्णो को योगवाह कहा जाता है।

**अथायोगवाहाः।**

सू.अ - अब अयोगवाह आते है।

विशेषः - उपध्मानीय उष्मा च जिह्वामूलीयनासिके। अयोगवाहाः विज्ञेया आश्रयस्थानभागिनः॥ (पा.शि.,22) अकारादिना वर्णसमाम्नायेन सहिताः सन्तः एते वहन्ति आत्मलाभं प्राप्नुवन्ति अयोगवाहाः (वा.प्रा,8.18 उ.भा)। अविद्यमानः योगः प्रत्याहारेषु सम्बन्धं येषां ते अयोगाः, अनुपदिष्टत्वाद् उपदिष्टैरगृहीतत्वाच्च प्रत्याहारसम्बन्धशून्या इत्यर्थः। वाहयन्ति निर्वाहयन्ति प्रयोगमिति वाहाः। अयोगाश्च ते वाहाश्च इति कर्मधारयः। अनुपदिष्टत्वे उपदिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः (भट्टोजी दीक्षित, शब्दकौस्तुभ पृ. 225)॥

**अः इति विसर्जनीयः।**

सू.अ - अः विसर्जनीय है।

विशेषः - वायोर्विसर्जनेन जन्यत्वात् (तै.प्रा, 1.18 वै.आ)। ऊर्ध्वाधःस्थं बिन्दुयुग्मं विसर्ग इति गीयते (प्रयो.व्या,1.29 तु)। शृङ्गवद् बालवत्सस्य कुमार्याः स्तनयुग्मवत्। नेत्रवत् कृष्णसर्पस्य स विसर्ग इति स्मृतः (का.व्या, 1.16 दुर्गः)॥

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



**ᳵक इति जिह्वामूलीयः।**

सू.अ - क जिह्वामूलीय है।

विशेषः-उदूखलाकृतिर्वज्राकृतिर्वायं निगद्यते (प्रयो.व्या,1.123 वृत्तिः) ।क इति वज्राकृतिर्वर्णो जिह्वामूलीयसंज्ञो भवति(का.व्या,1.1.17 वृत्तिः)।

**ᳶप इत्युपध्मानीयः।**

सू.अ - प उपध्मानीय है।

विशेषः - उपध्मानीयः उपध्मानेन जन्यत्वात् (तै.प्रा, 1.18 वै.आ)। उपपूर्वात् ध्मा शब्दाग्निसंयोगयोः इति धातोः कमण्यनीय प्रत्ययः उपसमीपे ध्मायते शब्द्यते इति (का.व्या, 1.1.18 पञ्जी)। स चाशीत्यङ्कवत् गजकुम्भवत् वा (प्रयो.व्या, 1.124 वृत्तिः)। उप आ पूर्वक ध्मावातोष्टनन्तस्य रूपम्। उपध्माने भवः गाहादित्वात् (5.3.15) ईयः। उपध्मानीय इति वकारसंयोगे यदि तदा ध्वन धातोर्धणन्तादीयः (सु.व्या, 1.1.15 वृत्तिः)।

**हुं इति नासिक्यः।**

सू.अ - हुम् अनुनासिक है।

**अथ यमाः।**

सू.अ - अब यम आते है।

विशेषः - स्पर्शानां पञ्चमयोगे चत्वारश्च यमाः स्मृताः।

अनन्त्यश्च भवेत् पूर्वोऽन्त्यश्च परतो यदि।

तत्र मध्ये यमः तिष्ठेत् सवर्णः पूर्ववर्णयोः॥ ना.शि,2.1.8

नारदौदव्रजिमतेन यमो वर्गागम इति विधीयते। अन्ये तु यमं वर्णापत्तिं मन्यन्ते (पा.शि,4 पञ्जिका)।

(यमसंज्ञाविधानम्)

**कुमिति खुमिति गुमिति घुमिति यमाः।**

सू.अ - कुँ, खुँ, गुँ, घुँ यम है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



**अनन्त्यान्त्य संयोगे मध्ये यमः। पूर्वगुणो वा ।**

सू.अ - अनुत्तमस्पर्श (वर्ग के प्रथम चतुर्थवर्ण) तथा उत्तमस्पर्श (वर्ग का पञ्चमवर्ण) का संयोग होने पर मध्य में पूर्ववर्ती स्पर्श गुण से युक्त यम का आगम विकल्प से होता है ।

**अथानुस्वारौ ।**

सू.अ - इसके बाद अनुस्वार आते है।

विशेषः - अनु पश्चात् वर्गान्तरं उच्चार्यते... अनुस्वारः (प्रयो.व्या, व्या. 1.28 प्रभाप्रकाशिका)। स्वरमनुभवतीत्यनुस्वारः इति (पा.शि, 4 पञ्जिका)। अनुस्वर्यते पश्चादर्थे स्वरवदुच्चार्यत इत्यनुस्वारः इति याजुषभूषणः। अनुस्वर्यते सल्लीनं शब्द्यते इत्यनुस्वारः इति का.व्या, 1.1.19 दुर्गभाष्ये। अनु शब्दः संश्लेषे पूर्ववर्णेन संश्लिष्टो यथा स्या तथा उच्चार्यते इति का.व्या, 11. 19 कविराजः। 'अं' वर्णसमाम्नाये पठ्यते। स कांश्चित्स्वरधर्मान् गृह्णाति, काश्चिदव्यञ्जनधर्मान्। तद्यथा ह्रस्वत्वं दीर्घत्वं प्लुतत्वमुदात्तत्वं स्वरितत्वमिति स्वरधर्माः। तथा अर्द्धमात्राकालता स्वरवशेनोदात्तानुदात्तस्वरितत्वं संयोगश्चेति व्यञ्जनधर्माः तत्रोभयधर्मयोगादुभयस्वभावं स्वरव्यञ्जनयोरन्य-द्वर्णान्तरं प्रकाशयति 'अनुस्वारं व्यञ्जनं वा स्वरो वा इति ऋ.प्रा,1.5 उवटभाष्ये। अनुस्वारो व्यञ्जनं वा स्वरो वा इति परमतम्। तन्निरासार्थमुच्यते। अनुस्वारोप्युत्तमवद् व्यञ्जनमेवास्मच्छाखायाम् अर्धगकाररूपत्वात् - तै.प्रा, 2.30 वै.आ।

**अं आं इत्यनुस्वारौ ।**

सू.अ - अं आं यह दोनों अनुस्वार है।

इति द्वितीयः खण्डः

**0-----ॐ-----0**

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ तृतीयखण्डः॥

**ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः।**

सू.अ - पद में ह्रस्व से परे दीर्घ और दीर्घ से परे ह्रस्व वर्ण होते है।

(वर्णाख्याविधानम्)

**वर्णात्कारः, वर्णात् कारः प्रयोक्तव्यः। कारादाख्यायाम्।**

सू.अ - वर्ण से वर्ण को कार प्रयोगकरना चाहिए। वर्णों की आख्या कार से होती है।

विशेषः - कारशब्दः कृधातोः घञ् प्रत्यये निष्पन्नः भवति। क्रियतेऽयम् इति व्युत्पत्यानुसारेण अस्यार्थः भवति ध्वनिः। अनेन प्रकारेण अकारः - अ ध्वनिः- अवर्णः। इकारः- इ ध्वनिः- इवर्णः इत्यादि। कार शब्दः वर्णानां निर्देशकः भवति। वर्णानां निर्दिष्टकरणे कार शब्दस्य उपयोगः क्रियते। तेभ्योभितप्तेभ्यस्त्रयोवर्णा अजायन्त अकार उकारो मकार इति (ऐ.ब्रा,25.7)। इतोपि ऋ.प्रा-1.38,41, तै.प्रा-1.16, वा.प्रा-1.37,38, च.अ-1.4,34,36 ।पा.सू-3.3.108 वार्तिके ।

(व्यञ्जनाख्याविधानम्)

**व्यञ्जनमकारश्च पूर्वाद्वा ।**

सू.अ - अकार सहित व्यञ्जनवर्ण होते है।

विशेषः - कारशब्दोत्तर अकारव्यपेतः व्यञ्जनानामाख्या भवति।

(रेफाख्याविधानम्)

**रात्कः, रेफ इति। (रिति रेफात् इति पाठभेदः)**

सू.अ - रकारः रेफ से सम्बोधित किया जाता है।

विशेषः - एफशब्दोत्तरो रस्याख्या भवति ।यथा रेफ इति।

**स्पृष्टं करणं स्पर्शानाम् ।**

सू.अ - स्पर्श वर्णों का उच्चारण प्रयत्न स्पृष्ट है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



**दुस्पृष्टमन्तस्थानाम्।**

सू.अ - अन्तस्थों का दुःस्पृष्ट प्रयत्न है।

**विवृतं स्वरोष्मणाम्।**

सू.अ - स्वर एवं उष्म का विवृत प्रयत्न है।

विशेषः- ह्रस्वस्य अवर्णस्य प्रयोगे संवृतम् (पा.सू, 1.1.9, सि.कौ. 10)। ह्रस्ववर्णा प्रयोगे संवृतम् (माहे.सू,1 काशिकावृत्तिः)। सामीप्येन यदा स्पृशति सा संवृतता इत्येषोऽन्तप्रयत्नः (आपि.शि,8.3) । स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम् (पा.शि.21)।

**विवृततरमकारैकारौकाराणाम्।**

सू.अ - अकार ऐकार और औकार का विवृततर प्रयत्न होता है।

**संवृतो घोषवान्।**

सू.अ - संवृत अवस्था में घोषवान् होता है।

**विवृतो अघोषः।**

सू.अ - अघोष वर्णों का उच्चारण विवृत अवस्थामें होता है।

**नादाऽनुप्रदानाः स्वरघोषवन्तः।**

सू.अ - स्वर और घोषवर्णों का अनुप्रदान नाद है।

विशेषः - वायुमनुप्रदीयत इत्यनुप्रदानम् (ऋ.प्रा, 13. 1 उ.भा )। अनुप्रदीयते वर्ण इत्यनुप्रदानं मूलकारणम्। अनुप्रदीयते उपादीयते जन्यत इत्यर्थः (तै.प्रा,2.9 उ.भा)।

**श्वासोऽघोषाणाम्।**

सू.अ - अघोषवर्णों का श्वास है।

**तनीयान् *प्रथमानामुभौ ह चतुर्थानाम्*। सन्निवेशोऽन्यः।**

सू.अ - वर्ग के प्रथमवर्ण क च ट त प के उच्चारण में कम श्वास लगती है। वर्ग के चतुर्थ वर्ण घ झ ढ ध भ और ह की निष्पत्ति में संवृत विवृत और श्वास नाद दोनों मूल कारण होते है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तुलनात्मकं सूत्रम् - *तै.प्रा,2.10.11, *ऋ.प्रा,13.2.6, तै.प्रा,2.4.6, च.अ, 1.13 ।।

**प्रत्याहारार्थो वर्णो अनुबन्धो व्यञ्जनं यावतिथः तावतां तदादीनां ततः पराणाम् ॥ 3 ॥**

सू.अ - अब प्रत्याहार के लिये परवर्ती क्रम अर्थात् उपदेश क्रम से वर्णों का विवेचन किया जा रहा है।

इति तृतीयः खण्डः

**0-----ॐ-----0**

## चतुर्थखण्डः

**ए ओ ऐ औ आ ॠ ॡ ई ऊ ऋ ऌ इ उ आः। र य व लाः ।ङ ञ ण न माः। घ झ ढ ध भाः। ग ज ड द बाः। ख छ ठ थ फाः। क च ट त पाः। ह श ष साः। अः ᳵक ᳶपाः। हुं कुं खुं गुं घुं अं आं।**

**एवमुपदेशे स्वराणां सन्ध्यक्षराणां दीर्घाणां* ह्रस्वानां समानानामन्तस्थानां उत्तमानां स्वरान्तस्थोत्तमानामकारघोषाणां हकारस्तु* घोषवतां अघोषाणां सोष्मणामूष्मणाञ्च ।**

सू.अ - इस प्रकार उपदेश क्रम में स्वरों में सन्ध्यक्षर, दीर्घ, ह्रस्व समानाक्षर, अन्तस्था, वर्ग के पञ्चमवर्ण, (ग ज ड द ब ) की घोषवत्ता अकार और (घ झ ढ ध भ )की सघोषता हकार को बतलाते हुए सोष्म और ऊष्म वर्णों का कथन किया जाता है।

विशेषः - ऋक्तन्त्रे सोष्मण वर्णानां उल्लेखः दृश्यते। वर्ग द्वितीय चतुर्थ वर्णानां सोष्मन् इत्येवमुक्तम्। परन्तु विशेषतया विवेचनं न कृतम्। ऋक्प्रातिशाख्ये एतदुपरि विवेचितम् तद्यथा- ऊष्मा वायुः तेन सह वर्तन्त इति सोष्माणः (ऋ.प्रा,1.13 उ.भा)। ऊष्मा वायुः ऊष्मणा सह

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वर्तन्त इति सोष्माणः (वा.प्रा,1.54 उ.,भा) । सोष्मतां च सोष्मणामूष्मणाहुः सस्थानेन (ऋ.प्रा,13.16)। सोष्मणां वर्णानां सोष्मत्वं सस्थानेनोष्मणाहुः। खकारस्य ᳵक इत्येतेन। छकारस्य श इत्येतेन। ठकारस्य ष इत्येतेन। थकारस्य स इत्येतेन। फकारस्य ᳵप इत्येतेन (ऋ.प्रा, 13.16 उ.भा)। ऊष्मा वायुस्तत्प्रधानावर्णा ऊष्माणः इति (ऋ.प्रा,1.10उ.भा)। ऊष्माख्य बाह्यप्रयत्नयोगादूष्माण इत्याख्या (तै.प्रा, 1.9 वै.आ) तुलनात्मकं सूत्रम्- ऋ.प्रा-13.15, ऋ.प्रा-13.17।।

**प्रत्याहारेरहयोर्वर्गसंज्ञातुस्थानानामसिद्धिरिति चेत् ह्रस्वतर नासिक्यस्थानेषु मात्राकरणं विशिष्टानामपि प्राप्तिस्तथा सिद्धमिति।**

सू.अ - इस प्रकार प्रत्याहार में वर्ग संज्ञा और उच्चारण स्थान सिद्ध होते है, जिससे कि नासिक्य स्थान ह्रस्वतर मात्राकरण आदि का विशिष्ट ज्ञान भी सिद्ध होता है।

**इदमक्षरं छन्दोवर्णशः*समनुक्रान्तम्।**

सू.अ - ये अक्षर छन्द में वर्णशः परिव्याप्त रहते हैं।

विशेषः - अक्षरशब्दस्य निष्पत्तिः क्षर् सञ्चलने धातोः अच् प्रत्यये अथवा अशूव्याप्तौ धातोः सर अथवा औणादिक सरन् प्रत्यये भवति। (धा.पा,350)। अश्नतेर्वा सरो क्षरम्। अश्नोतेर्वा पुनरयमौणादिकः सरन् प्रत्ययः। अश्नुत इत्यक्षरम् (म.भा,1.1.2)। निरुक्ते 13.12। अथ किमिदमक्षरमिति ? अक्षरं न क्षरं विद्यात्। न क्षीयते क्षरति वा अक्षरम् (म.भा,1.1.2)। वेदस्योच्चारणवेलायां स्वरधर्मा उदात्तादि गुणास्तत्समीपस्थेषु व्यञ्जनेष्वपि निविशन्ते प्रदीपप्रभेव घटादिषु (तै.प्रा,21.1 वै.आ)। यदक्षरपरिमाणं तच्छन्दः इति ऋक्सर्वानुक्रमणी,

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



2.6 । छन्दो क्षरसंख्यावच्छेदकमुच्यते इति बृहत्सर्वानुक्रमणी ,8.1 । छन्दः पादौ तु वेदस्य ...पा.शि, 41 । ऋ.प्रा-17.18।।

**यथाचार्या ऊचुः ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय इन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्यः ऋषयो* ब्राह्मणेभ्यः* तं खल्विममक्षरसमाम्नायमित्याचक्षते।**

सू.अ - आचार्यों का अनुसार ऐसा कहा जाता है कि इस अक्षर समाम्नाय का उपदेश ब्रह्मा ने बृहस्पति को बृहस्पति ने इन्द्र को इन्द्र ने भरद्वाज को भरद्वाज ने ऋषियों को और ऋषियों ने ब्राह्मणों को दिया।

विशेषः - * ऋषयः कवयः इति शतपथब्राह्मणम्-1.7.3.4। यै वैतेन ऋषयः पूर्वे प्रेतास्ते वै कवयः इति ऐतरेयब्राह्मणम्-6.20। अजान् हवै प्रश्नीस्तपस्यमानान् ब्रह्म स्वयम्भ्वध्यानर्षत् तदृषयो भवन् तदृषीणां ऋषित्वम् इति तैत्तिरीय आरण्यकम्-2.9.1। इतोपि जै.ब्रा-2.266, छा.उ-1.3.10, बृ.उ-1.4.10,2.2.3 ।।

* चातुर्वर्ण्येषु ब्राह्मणस्य अत्यन्तं विशिष्टं स्थानं विद्यते । ब्राह्मणाः एव अध्ययन अध्यापन कार्येषु निरताः आसन् । प्राचीनकालात् एते विद्यायाः प्रचार प्रसार क्षेत्रे लिप्ताः। तत्र आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् इति तै.सं-7.5.18.1, एवं श.ब्रा-3.9.1.2, गो.ब्रा-1.2.23, छा. उ- 1.8.2, बृ.उ-1.4.5, गीता -2.24, 5.18 इत्यादि।।

समित्येकीभावे आ इति मर्यादायाम् । म्नाय इति आनुपूर्व्येणोपदेशः। एकीभूता अकारादयो वर्णा स्वरभक्तिपर्यवसाना आनुपूर्व्येण पूर्वैः शिष्टैरुपदिष्टाः ( तै.प्रा,1.1 त्रिभाष्ये )। समित्युपसर्गासहत्वं द्योतयति। यत्र समुदितानामभ्यासः क्रियते स

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



समाम्नायः (तै.प्रा,1.1 वै.आ)। वर्णाः यस्मिन् समाम्नाये पठ्यन्ते स वर्णसमाम्नायः (वा.प्रा,8.1 उ.भा)। समाङ्पूर्वस्य म्नातेरभ्यासस्य कर्मणि कारके समाम्नायः। समस्यते मर्यादायामिति समाम्नायः (नि,1.1 दुर्गः)।।

**न भुक्त्वा न नक्तं प्रब्रूयात् ब्रह्मराशिरिति च *ब्रह्मराशिरिति च॥ 4॥**

सू.अ - भोजन के अनन्तर और रात्रि में अक्षर समाम्नायात्मक ब्रह्मराशि का प्रवचन नहीं करना चाहिए ब्रह्मराशि का प्रवचन नहीं करना चाहिए।।

विशेषः-*तुलनात्मकं सूत्रम्- वा.प्रा-3.15, म.भा-1.1.2 ।।

इति चतुर्थखण्डः

।।इति प्रथमप्रपाठकः।।

**0-----ॐ-----0**

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ द्वितीयप्रपाठकः

### 1. मासे यथा दृष्टः॥ 1॥

**वृत्तिः** - वर्णोऽधिकृतः। समासे यथा दृष्टः। तथा विज्ञेयः।।

**विवरणम्** - समस्तपदे आर्चिकसंहितायां अध्ययनसम्प्रदायेन यथा प्राप्तं जानीयादित्यर्थः। तच्च प्रायेण व्याकरणानुसार्येव भवति।।

3 1 2　3 2 3
**उदाहरणम्** - यथा सहर्षभाः। सह-ऋषभाः इति पदपाठः, अत्र ऋकारस्य अर्त्वं, अकारस्य आद्गुण इति गुणः सहर्षभाः (626 ) इति।
3　1 2र
गो-ऋजीकम् (313) अनापत्तिः- अत्र ऋकारस्य अर्भावो नास्ति। गव्यू
3　3 1 2　3　1 2र
तिम् । गो-यूतिम्(220) अत्र अवादेशः। उषर्बुधः । उषः-बुधः(40) अत्र
3 1 2　3　1 2र　3 1 2　3 1
रेफत्वम्। तथैव सबर्दुघाम् । सबः-दुघाम्(295)। सम्राजन्तम् । सं- रा
2र　3 1 2　3 1 2र
जन्तम् (17)। अत्र अनुस्वार प्रतिषेधः। ऋतीषहम् । ऋति-सहम्
2　3　2　3क2उ　1 2र
(354)। तुविकूर्मिम् । तुवि-कूर्मिम्(354)। प्रतीव्यम् (103)। परीणसि
1 2र 3　3 1 2　3 1 2र　1 2　3
। परि-नसि(34) । ऋतावृधः । ऋत-वृधः(258)। तुग्रियावृधम् । तु
1 2र　3　3
ग्रिय-वृधम्(283)। ऋतावसो। ऋत-वसो(255) । प्रभूवसो । प्रभु- वसो
1 2　3 1 2र　3 1 2　3 1 2र　3 2
(373)। सूनरी । सु-नरी (303) । सूनृतावतः। सु-नृतावतः (754)। दूरा
3 2　3 2　3 2　1 2　3 2 3
त् । दुः-आत् (219)। दूरे । दुः-ए (53) । तुवीमघं । तुवि-मघं (729)अत्र
3　1 2　3　1 2र
सर्वत्र दीर्घत्वम्। चर्षणीधृतम् । चर्षणी - धृतम्(374)। अत्र प्रतिषेधः।
1 2र 3　1 2र　1 2र　1 2र 3
श्रुतकक्षारम्। श्रुत-कक्ष-अरम्(118) । अश्वपते । अश्व-पते(402) ।
3 1 2　3 1 2र　3　2
मूर्धन्यापत्तिः। दुष्वप्न्यम् । दुः-स्वप्न्यम्(141)। अत्र षत्वम्। दुरोणयुः ।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



3 2 12र 12र 3 2र
दुः-ओनयुः (39) । परीणसि । परि-नसि(34) । अत्र णत्वम् । स्वर्णरम् ।
2 र 3 3
स्वः-नरम्(109) । अत्र णत्वम् । अत्र सर्वत्र मूर्धन्यापत्तिः । गिर्वणः ।
12र 12र 3
गिः-वनः(165) । अत्र बहुलम् । पुरुणामन् । पुरु-नामन्(188) । प्रणेतः
1 2 3 1 2 1 2र 3 1 2
। प्र-नेतः (193) । अतीहि मन्युषाविणम् । अति-इहि-मन्युषाविणम्
3 1 2 3 1 2 र 3 1 2 3 12र 3
(223) । नृमणाः । नृ-मनाः (323) । सत्राहणम् । सत्रा-हनम्(335) । वृत्र
1 2 3 12र 3 1 2
हणा । वृत्र-हना (1702) । वृषमणः । वृष-मनः (336) । निर्णिजे (560),
2 3 1 2 2 3 2उ 3 3 1
आ-हर्यताय(551), त्रिरस्मै (560), प्र देवमच्छासु (563) च प्राणा सि
2र 3 2 3 2 1 2र 3 1 2र 3 2
न्धूनाम् । प्राणा-प्र-आना-सिन्धूनाम्(559) । प्राणा शिशुः । प्र- आना-
1 2र 12र 3 1 2र 2
शिशुः(570) । प्रणपात् । प्र-नपात्(727) । सार्पराज्ञीषु च । गोषाता । गो
3 3 2 3 2 3 1 2
-साता (34) । सुष्टुतिम् । सु-स्तुतिम्(348) । उपकण्वादौ च । नृषद्मा ।
3 1 2र 3 1 2 3 1 2र 12र 3
नृ-सद्मा (77) । नृषाहम् । नृ-साहम्(144) । नृषूतः । नृ- सूतः (279) ।
1 2र 3 3 1 2 3 1 3 2 3 2 2
नृषाता । नृ-साता (318) । हव्यमानुषक् । हव्यं-अनु- सक् (82) । आ
3 2 12 3 1 3 2 3 2 2 12र
घाये (133) पवस्व देवायां च (483) आयुषक् । आयु- सक् । इत्- सुभृ
3 1 2 3 1 2 र
तः (79) । दुष्वप्न्यम् । दुः-स्वप्न्यम्(141), स्तोभे । रयिष्ठाः । रयि-
2र 12र 3
स्थाः(स्तोभे 1.2) । पुरुणामन् पुरुष्टुत । पुरु-नामन्-पुरु-स्तुत (188) ।
3 2 3 2 3 3 2 3 2 1
धर्ता (558) इमे- ते (373) पुरुहूतादिषु (714) च पुरुष्टुतम्, मन्युषावि
2 3 1 2 3 1 2 3 1 2
णम् (223) ऋतीषहम् (236) तुव्यादौ च (354 ऋतीषहम्) । उपमा अ

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्य विष्ठाः (321)। चक्रं यदायाम् (331 निषत्तम्)। इन्द्राय गिरायाम् (339)। विष्वगभिप्रियायाम् (554 विष्वञ्चम्), पुरुषव्रते च (619-विष्वङ्), आ नो वयायाम् (353 नेष्ठाम्), प्रप्र वस्त्रिष्टुभमिषम् (360), आनुष्टुभस्य (599), विष्कभिते (378), विषूवतः (409), अनुष्वधम् (423), अप्सु दक्षो गिरिष्ठाः (473), परिस्वानायाम् च (475- गिरिष्ठाः), सुष्टुतः (1502), बर्हिषदः (563), परमेष्ठी (602), अभिमातिषाहः (603), दिक्षुसदः (स्तोभः 2.5), इन्द्राग्नी (281), इन्द्रपानः (532), सोमे सोमे (188), सुते सुते (201), गोसखा (122), स्त्रिया (सामवि. 2.5.1) हृदिस्पृशम् (434), पुरुस्पृहम् (486)।। एवं सर्वत्र द्रष्टव्यम्॥

सू.अ - समास में वर्ण जैसे दृष्टिगोचर हो वैसे ही जानना चाहिए।

विशेषः - मासे इति समासस्य संक्षेपरूपः। समासस्य अर्थं भवति, संक्षिप्तकथनम्। इतोपि अनेकपदानां परस्परमेलने सकारार्थक-वाचकत्वेन यत् संक्षिप्तप्रक्रिया भवति, तदेव समास इत्युच्यते (बृ. दे. 2.105)।।

## 2. हाः कण्ठे ॥2॥

वृ- हकार अकार आकार विसर्जनीयाः कण्ठस्थानाः।

सू.अ- हकार, अकार, आकार तथा विसर्जनीय ये सब वर्ण कण्ठ स्थानीय है।।

विशेषः - कण्ठे भवः कण्ठ्यः (ऋ.प्रा, 1.38 उ.भा)। अवर्णश्चविसर्गश्च हकारश्चापि केवलः। कण्ठ्याः वर्णाः स्मृताः ह्येषाः हनुमध्यन्तु कारणम्

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain

Digitized by Madhuban Trust, Delhi



(वा.प्रा.शि.33)। कण्ठस्थानौ हकारविसर्जनीयौ (तै.प्रा, 2. 46)। अकुहाः कण्ठजाः प्रोक्ताः (मा.शि, 22)। अकुहविसर्जनीयानां कण्ठः (पा.सू, 1.1.9)।।

**3. उरसि विसर्जनीयो वा ॥ 3॥**

वृ - उरसि विसर्जनीयस्तिष्ठति।।

वि- पूर्वसूत्रेण कण्ठस्थानं प्राप्तस्य विसर्जनीयस्य अत्र उरः स्थानमपि विधीयते, तथा च विकल्पः।।

सू.अ - अथवा विसर्जनीय का उच्चारण उर में किया जाता है।।

विशेषः- हकारपञ्चमैर्युक्तमन्तःस्थाभिश्च संयुक्तम्।
उरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुक्तम्।। पा.शि.17

**4. जिह्वामूले ᳵ कृ ॥ 4॥**

वृ - जिह्वामूलीयस्था जिह्वामूलस्थानाः। ककारऋकारॠकाराः।

वि - जिह्वामूलीयः ककार ऋकार ॠकाराः जिह्वामूलस्थानाः। अत्र ककारेण कवर्गस्य ग्रहणम्।।

सू.अ - क, ऋ और ॠ का उच्चारण जिह्वामूल में किया जाता है।।

विशेषः - जिह्वामूलीयं जिह्वामूलजन्यत्वात् (तै.प्रा, 1.18 वै.आ)। जिह्वामूलं उच्चार्यतेऽसौ जिह्वामूलीयः (मुग्ध.व्या,20 दुर्ग भाष्ये)। ऋकारल्कारावथ षष्ठ ऊष्मा जिह्वामूलीयाःप्रथमश्च वर्गः(ऋ.प्रा, 1.41)

**5. तालुनि श्च्ये ॥ 5॥**

वृ - तालुस्थानाः शकारचकारयकारइकारईकारएकाराः।।

वि - शकार चकार यकार इकार ईकार एकाराः तालुस्थानाः। अत्र चकारेण चवर्गस्य ग्रहणम्।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - शकार, चकार, यकार, इकार, ईकार और एकार तालुस्थानीय है ।।

विशेषः - तालव्यावेकारचकारवर्गाविकारैकारौ यकारः शकारः (ऋ.प्रा, 1.42) ।।

## 6. मूर्धनि षटौ ॥ 6 ॥

वृ - मूर्धनि षटौ तिष्ठतः।

वि - षकार टकारौ मूर्धनि तिष्ठतः। मूर्धस्थानौ भवतः इत्यर्थः। टकारेण टवर्गग्रहणम्।

सू.अ - षकार और टवर्ग मूर्धा में उच्चरित होते है।

## 7. दन्तेत्स्लाः ॥ 7 ॥

वृ - दन्तस्थानास्तकारसकारलकाराः ।।

वि - तकार सकार लकाराः दन्तस्थानाः। अत्र तकारेण तवर्गस्य ग्रहणम् ।।

सू.अ - तकार, सकार और लकार दन्त्य है। तकार से तवर्गका ग्रहण होता है।

## 8. रेफो मूले वा ॥ 8 ॥

वृ - रेफस्तु दन्त्यो दन्तमूले वा ।।

वि - रेफस्तु दन्ते , दन्तमूले वा रेफो मूले वा ।।

सू.अ - रेफ का उच्चारणस्थान दन्त अथवा दन्तमूल है ।।

## 9. ओष्ठ्ये वोः ᳵपू ॥ 9 ॥

वृ - ओष्ठ्यस्थाना वकार-ओकार-औकार-उपध्मानीय-पकार-उकार ऊकाराः ॥

वि - वकार ओकार औकार उपध्मानीय पकार उकार ऊकाराः ओष्ठस्थानाः । ओकारेण औकारस्यापि उपलक्षणतया तथा पकारेण पवर्गस्य च ग्रहणम् ।।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - वकार, ओकार, औकार, उपध्मानीय पकार, उकार और ऊकार ओष्ठस्थानीय है ।।

**10. किट् किडाकारो हन्वाम् ॥10॥**

वृ - किट् किडाकारो हन्वां तिष्ठति ।।

वि - हनुस्थानः किट् किडाकारः। किट् किट् इति शब्दः। इट् किडाकारौ इति पाठान्तरम् ।।

सू.अ - किट् किट् स्वरुपा ध्वनि हनु में होती है ।।

इति प्रथमो दशकः

**0-----ॐ-----0**

अथ द्वितीयो दशकः

**11. अविशेषस्थानौ संस्वादनिगारौ ॥1॥**

वृ- अविशेषस्थानौ भवतः सर्वस्थानप्राप्तौ संस्वादनिगारौ। पकार-नकार-यकारा वा संस्वादे। हकार-मकार-नासिक्या वा निगारे॥

वि - संस्वादनिगारौ सर्वस्थानापन्नौ भवतः। पकार नकार यकारा वा संस्वादः। हकारमकार नासिक्या वा निगारः। प्न्य, हिं इति यथासंख्यमुदाहरणम् ।

सू.अ - सर्वस्थान प्राप्त होने पर पकार नकार और यकार प्न्य का उच्चारण संस्वाद में और हकार, मकार और नासिक्य ह का उच्चारण निगार में किया जाता है।

**12. नासिकायां यमानुस्वारनासिक्याः ॥2॥**

वृ - नासिकास्थाना भवन्ति यमानुस्वारनासिक्याः।।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वि - यम अनुस्वार नासिक्याः नासिका स्थाना भवन्ति। यमादीनां लक्षणं स्वयमेव वक्ष्यति ।

सू.अ - यम, अनुस्वार और नासिक्य नासिकास्थानीय होते है।

विशेषः - यमानुस्वारनासिक्यानां नासिके (वा.प्रा, 1.74)। नासिक्य यमानुस्वारान् (ऋ.प्रा,1.48)। नासिकायां नासिका (च.अ, 1.26)। नासिक्ये नासिकास्थानं तथानुस्वार उच्यते। यमा वर्गोत्तमाश्चापि यथोक्तं चैवं ते मताः (च.अ,1.26 टीकायाम्)

**13. स्पर्शे गस्य॥ 3॥**

वि - स्पर्शग्रहणे वर्गस्य ग्रहणं विज्ञेयम्। स्थानेष्वित्यधिकारः। यत्र ककारो गृह्यते तत्र सर्वः कवर्गः गृहीतव्यः। यत्र चकारस्तत्र चवर्गः। यत्र टकारः तत्र टवर्गः। यत्र तकारः तत्र तवर्ग इति । यत्र पकारः तत्र पवर्ग इति।

सू.अ - स्पर्शवर्ण में प्रथमवर्ण का ग्रहण करने पर सम्पूर्ण वर्ग का ग्रहण मानना चाहिए।

**14. उत्तमा घोषाः॥ 4॥**

वृ - यत्रोत्तमा घोषा भवन्ति तत्र वर्गस्येत्यधिकारः।

वि - वर्गस्येत्यनुवर्तते। वर्गस्य उत्तमाः वर्णाः घोषसंज्ञका भवन्ति। ते ग ज ड द बाः। घ झ ढ ध भाः। ङ ञ ण न माः इति ।

सू.अ - वर्ग के अन्तिम तीन वर्ण घोष होते है।

**15. हान्तस्थाः ॥ 5॥**

वृ - हकारोऽन्तस्थाश्च घोषसंज्ञा भवन्ति ।

वि - घोषा इत्यनुवर्तते। हकारः अन्तस्थाश्च घोषसंज्ञकाः भवन्ति। ते ह य र ल वाः।

सू.अ - हकार और अन्तस्था य, र, ल, व भी घोष कहलाते है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 16. युग्मास्सोष्माणः ॥ 6 ॥

वृ - युग्मा सोष्माणो भवन्ति।

वि - वर्गस्येत्यधिकारः। वर्गद्वितीय चतुर्थाः, ऊष्माणश्च घोषसंज्ञा भवन्ति। ते ख छ ठ थ फाः, घ झ ढ ध भाः। श ष साश्च।

व्या - ऊष्मणा संयुक्तयोः वर्गद्वितीयचतुर्थयोः अत्र घोषत्वं विधीयते। न तु केवलं शषसानाम्।

सू.अ -युग्म अर्थात् वर्ग के द्वितीय और चतुर्थवर्ण सोष्मण कहलाते है।

विशेषः -ऊष्मावायुः तेन सह वर्तन्त इति सोष्माणः (वा.प्रा,1.13 उ.भा) ऊष्मा वायुः ऊष्मणा सह वर्तन्त इति सोष्माणः(वा.प्रा, 1.54 उ.भा) सोष्मतां च सोष्मणामूष्मणाहुः सस्थानेन (ऋ.प्रा,13.16)। सोष्मणां वर्णानां सोष्मत्वं सस्थानेनोष्मणाहुः। खकारस्य ᳵक इत्येतेन। छकारस्य श इत्येतेन। ठकारस्य ष इत्येतेन। थकारस्य स इत्येतेन। फकारस्य ᳶप इत्येतेन (ऋ.प्रा,13.16 उ,भाष्ये)। ऊष्मावायुः तत्प्रधानावर्णा ऊष्माणः (ऋ.प्रा,1.10 उ.भाष्ये)। ऊष्माख्यबाह्यप्रयत्न-योगादूष्माण इत्याख्या (तै.प्रा, 1.9 वै.आ)।।

## 17. अन्त्योऽनुनासिकः ॥ 7 ॥

वृ - वर्गाणामन्त्यो वर्णः अनुनासिकसंज्ञः स्यात्। ते ङ ञ ण न माः।

सू.अ - वर्ग के अन्तिम वर्ण- ङ, ञ, ण, न, म अनुनासिक होते है।

## 18. साक्षरः पदान्तोऽवसितः ॥ 8 ॥

वृ - साक्षरः समानाक्षरः पदान्तः अवसितः अनुनासिकसंज्ञः स्यात्। उदा- दधि, मधु, त्रपु, गुरु, लघु, पट्ठ , मृदु इत्यादि।

व्या - दधि इत्यत्र वर्णयोः ह्रस्वत्वात् समानाक्षरत्वम्। पदान्तत्वं, अवसितत्वञ्च वर्तते। अतः धि इत्यस्य अनुनासिकत्वं भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



2 3 1 2 1 2र
एवमुत्तरत्रापि। मन्त्रे अग्न आ याहि (1) साक्षरं इति किम् ? अग्ने इत्यत्र अकार एकारयोः समानत्वाभावात् न अनुनासिकत्वम्। पदान्तोऽवसितः इत्युक्तत्वात् संहितायां न भवति।

सू.अ - पदान्त अवसान में अवस्थित अक्षरसहित समानाक्षर अनुनासिक होता है।

## 19. येकवचने ॥ 9 ॥

वृ - ईकारस्य द्वैधमेकवचनेऽनुनासिको भवति।

व्या - अनुनासिक इत्यनुवर्तते। ई एकवचने अनुनासिको भवति। ईकारः द्विविधः एकवचनः द्विवचनश्च। तत्र एकवचन ईकारः अनुनासिकः।

1 2 2र 3 1
उदा - स्त्री ब्राह्मणी वृषली प्रभृतीनि। इन्द्राग्नी (281), द्यावापृथिवी

1 2
(326), रोदसी (278) इत्यादौ एकवचनत्वाभावान्नानुनासिकत्वं भवति । तथैव गच्छन्त्यमी, धावन्त्यमी, भुञ्जन्त्यमी, साक्षी, दाक्षी, काकी, पौष्णीत्यादावपि। स्त्री चेदनुनासिकम्। इन्द्राणी शाकटायनी च । ई एकवचने, ईकारमनूद्य एकवचनत्वं विधीयत इति।
पाठभेदः-एकवचने ।।
सू.अ - संयुक्त ईकार एकवचनमें अनुनासिक होता है।

## 20. व्यञ्जनं पूर्वस्यान्तस्वरम् ॥ 10 ॥

वृ - व्यञ्जनं खलु पूर्वस्य स्वरस्यान्तस्वरं भवति।

वि-अवसितमित्यधिकारः। अवसीयतेऽत्रेत्यवसितम्। विरामावधिभूतं व्यञ्जनम्। तत्तु पूर्वस्वरं भजते। पदान्तं व्यञ्जनं पूर्वस्य

1 2 3 2र 2 3 2
स्वरस्यान्तस्वरं भवति। यदिन्द्र प्राक्। यत् - इन्द्र - प्राक् (279)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या - अत्र ककारस्य पूर्व आकारस्वर एव। बट्-महान् (276), यत्-अद्य। यदद्य कत् (126), तदावृणी (138), प्रत्यङ् (636), महाँ इन्द्रो यः (1307), समन्यायन्ति (607) इत्यादावपि तथैव। व्यञ्जनम् ? अवसाने संहितायाम् ॥

सू.अ - व्यञ्जनपूर्ववर्ती स्वरके अन्त्य स्वरका अङ्ग होता है।

विशेषः- तुलनात्मकं सूत्रम्- व्यञ्जनान्युत्तरस्यैव स्वरस्यान्त्यं पूर्वभाक् (ऋ.प्रा, 18. 33) । अवसितं पूर्वस्य (तै.प्रा,21.3) । च.अ-1.57 ।

इति द्वितीयो दशकः

**0-----ॐ-----0**

अथ तृतीयो दशकः

**21. अभिनिधानः ॥ 1 ॥**

वृ - क्रमजं च पूर्वान्तसस्वरं भवति।

व्या - क्रमजस्य अभिनिधान इति संज्ञा। क्रमजस्वरूपं उत्तरत्र रात्सण (269) इति सूत्रे वक्ष्यते। सस्वरमित्यनुवर्तते। क्रमजश्च पूर्वान्तसस्वरं भवति।।

उदा - अच्छा वीरन्नर्य्यम् (56) अत्र 'नर्यं' इति रेफस्य अकारस्वर एव। एवं अर्क्कम् (158), प्र होत्रे पूर्व्यम् (98) आहर्य्यते (228) पवते हर्यतो (576), महस्य्य (97) एवमादीनि विरामे।

सू.अ - क्रमज पूर्ववर्ती स्वर का अङ्ग होता है।

विशेषः - तुलनात्मकं सूत्रम्- परेण चासँहितम् (तै.प्रा,21.5)। क्रमजं च (वा.प्रा,1.104)। रेफहकार क्रमजं च (च.अ,1.58)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 22. व्यञ्जने ॥ 2 ॥

वृ - व्यञ्जने च प्रत्यये पूर्वान्तं सस्वरं भवति।

व्या - पदान्तं व्यञ्जनमित्यधिकारः। पदान्तं व्यञ्जनं व्यञ्जने प्रत्यये पूर्वान्तसस्वरं भवति संहितायाम्।

2 3 2 3 1 2 3
उदा - यस्ते मदो वरेण्यः (470) अत्र 'य'कारात्परस्य 'स'कारस्य

23 3 1 2र 2 3
'य'कारस्वर एव। एवं यद्धूमिम् (121), यः पात्रम् (424) यस्ते (470)

1 2 1 2 1 2र
पन्यम् (123), तं वः (236) इत्यादिषु। व्यञ्जनमिति किम्? तमिन्द्रं

1 2 3 1 2
(119), त्वमिन्द्र प्रतूर्तिषु (311) इत्यत्र 'त्वं इन्द्र' इति इकारपरत्वात्

3 1
मकारस्य पूर्वान्तसस्वरत्वं नास्ति। पदान्तमिति किम् ? अपघ्न (510) इत्यत्र घकारस्य पदान्तत्वाभावात् पूर्वान्तसस्वरत्वं नास्ति।

सू.अ - पद के अन्त में व्यञ्जन हो तो वह पूर्ववर्ती पद के अन्त्य स्वरका अङ्ग होता है।

विशेषः - तुलनात्मकं सूत्रम्- संयोगादिर्वा (ऋ.प्रा,1.25)। संयोगादिश्च वैवं च (ऋ.प्रा,18.35)। संयोगादि (तै.प्रा.21.4)। संयोगादिः पूर्वस्य (वा.प्रा,1.102)। संयोगादि पूर्वस्य (च.अ,1.56)।

## 23. अनुस्वारौ च ॥ 3 ॥

वृ - अनुस्वारौ च पूर्वान्तसस्वरौ भवतः।

3 1 2र 2 र
व्या - अत्र अनुस्वारस्य पूर्ववर्ण स्वर एव। अपाँ रेताँसि (27), नव्याँसम् (28) इत्यादावपि। अनुस्वारो द्विविधः ह्रस्वात्परः दीर्घात्परश्चेति। द्विविधोप्यनुस्वारः सूत्रेण गृह्यते अनुस्वारौ इति। ह्रस्वाद्दीर्घः दीर्घाद्ध्रस्वः। ह्रस्वात्परः अनुस्वारः द्विमात्रः, दीर्घात्परः एकमात्रः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



3 2 3 1 2र 3 2उ 3
उदा - त्रिँशत्पदा (281), अँसत्रम् (275), त्रिँशद्धाम (632,1378)।

सू.अ - अनुस्वार पूर्ववर्ती अन्त्य स्वरका अङ्ग होता है।

## 24. र्लावव्यपरौ ॥ 4 ॥

वृ - रलौ पूर्वान्तसस्वरौ भवतः अव्यपरौ ।

व्या - वश्च यश्च व्यौ तौ परे ययोः तौ व्यपरौ न व्यपरौ अव्यपरौ। र्लाविति रेफः लकारश्च गृह्यते। अव्यपरौ रेफलकारौ पूर्वान्तसस्वरौ भवतः व्यञ्जने प्रत्यये इति सूत्रार्थः।

1 2 3 1 2
उदा - अर्क्कोदेवानाम् (स्तोभे 1.1), परा शुल्काय (291)। अत्र रेफस्य

1 2 3 2 1 2 3
लकारस्य च पूर्ववर्ण स्वर एव। एवं अर्कस्य देवाः (स्तोभे 1.1), स्पर्धन्त

1 4 3 1 1 2 3
(539), का23र्धी3 (गाने.165) शुल्काय (291) गल्दया (307)

2र 3 1 2 1 2र
इत्यादिषु। अव्यपरौ इति किम्? स्वर्वाँ असुरेभ्यः (254), प्र होत्रे पूर्व्यम्

3 1 2
(98) शल्यात्मा (आ.गा.78), अत्र 'व' 'य'कारपरत्वात् रेफलकारयोः

3 1 2
पूर्वान्तसस्वरत्वं नास्ति। व्यञ्जने इति किम् ? स्या अरातेः (6) अत्र रेफस्य पूर्वान्तसस्वरत्वं नास्ति।

सू.अ - व्य बाद में न हो तो र,ल पूर्वान्त स्वर के अङ्ग होते है।

## 25. स्पर्शः स्वे ॥ 5 ॥

वृ - स्पर्शः स्वे प्रत्यये पूर्वान्तसस्वरो भवति ।

व्या - स्वे इति स्पर्शत्वेन समानमक्षरं गृह्यते ।

2 3 1 2
उदा - अग्न आयाहि अत्र 'ग'कारस्य 'न'कारे स्पर्शे परतः पूर्ववर्णस्वर

3 1 2 1 2र 1 2र 3 2 3 1 2
एव। सख्यं ते (324), अग्ने (1), न ज्यायः (203), अरण्योः (79), अन्ध

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सः[3] (313), इन्द्राय[1 2 3] (388), विभ्राट्[3 2] (628) प्रभृतीनि। स्वे इति किम् ? विभ्राट्- अत्र भकारस्य रेफपरत्वात् पूर्ववर्णस्वरो नास्ति। जज्ञानः[3 1 3] स (101) आदीनि। सुरूपकृत्नुम्[3] (160)

सू.अ - ह्रस्व स्वर परे रहते स्पर्श व्यञ्जन पूर्वान्त स्वर का अङ्ग होता है।

## 26. रादिरमन्यत् ॥ 6 ॥

वृ - परादिस्वरमन्यदतः।

व्या - परस्य वर्णस्य आदि व्यञ्जनम्। अन्यत् स्वरं उत्तरवर्णस्य स्वरमापद्यते । उदा अग्न इत्यत्र नकारः अकारस्वरः तृतीयस्वरः न पूर्वान्तसस्वरः॥

सू.अ - स्वरों के मध्य वर्तमान व्यञ्जन परवर्ती अन्त्य स्वर का अङ्ग होता है।

## 27. सयुक्सण् ॥ 7 ॥

वृ - संयुक्तं व्यञ्जनं संयोगसंज्ञं भवति।

व्या - व्यञ्जनमित्यनुवर्तते । संयोगस्य सण् इति पारिभाषिक नाम। उदा - वित्तं मे अस्य रोदसि[3 1 2 3 1 2] (417) इति अत्र 'त्त' इत्यस्य 'सण्' इति संज्ञा। चित्तम्[3 1] (1861), वित्तम्[3 1] (417) भित्तम्, निमित्तम्, एवमादीनि।

सू.अ - संयुक्त व्यञ्जन संयोगसंज्ञक होता है।

## 28. मात्रार्द्धमात्रा वा ॥ 8 ॥

वृ - मात्रा वा अर्धमात्रा वा भवति। व्यञ्जनमित्यधिकारः।

व्या - अत्र वर्णस्य मात्राकालः उपदिश्यते। व्यञ्जनं मात्रा एकमात्रा भवति ।अर्द्धमात्रा वा भवति ।।

सू.अ -व्यञ्जन एक मात्रा अथवा आधी मात्रा काल वाले होते है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विशेषः - मीयन्ते मान्तीति मात्राः (ऋ. 3.38.3 सायणभाष्ये)। यद्धेव मिमीते तस्मान् मात्रा (श.ब्रा,3.9.44)।

**29. गतिश्च त्रिकला वा ॥ 9 ॥**

वृ - गतिश्च मात्रा अर्द्धमात्रा वा त्रिकला वा।

व्या - इ गतिः उगतिश्च क्वचिद् एकमात्रा भवति क्वचित् त्रिकला, क्वचिदर्धमात्रा च भवति।

सू.अ-गति मात्रा, अर्धमात्रा अथवा त्रिकला मात्रा कालवाली होती है।

विशेषः - सामगाने आ कार परं इ एवं उ तथा इ कार परं ओ मिलित्वा उच्चारणं गतिरुत्यते।

**30. सन्ध्याद्यश्च ॥10॥**

वृ- सन्ध्याद्यश्चवर्णः त्रिकलो भवति। एकारौकारयोः।

व्या - एकार ओकारयोः सन्ध्य इति नाम। अकार इकारयोः अकार उकारयोश्च सन्ध्यत्वात्, तयोः आद्य अकारः त्रिकलो भवति।

सू.अ - ए, ओ, ऐ, औ -ये सन्ध्यक्षर त्रिकला मात्रा काल वाले होते है।

इति तृतीयो दशकः

0-----ॐ-----0

अथ चतुर्थो दशकः

**31. द्रुतायां मात्रा ॥ 1 ॥**

वृ - द्रुतायां वृत्तौ मात्रा त्रिकला भवति।

सू.अ - द्रुत वृत्ति में मात्रा त्रिकला होती है।

**32. चतुष्कला मध्यमायाम् ॥ 2 ॥**

वृ - मध्यमायां वृत्तौ मात्रा चतुष्कला भवति।

सू.अ - मध्यम वृत्ति में मात्रा चतुष्कला होती है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 33. पञ्चकला विलम्बितायाम् ॥ 3॥

वृ - विलम्बितायां वृत्तौ मात्रा पञ्चकला भवति।
व्या - एतदुक्तं नारदशिक्षायाम्-

अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम्।
शिष्याणामुपदेशार्थे कुर्याद्वृत्तिं विलम्बिताम्॥ (2.6.21)

सू.अ - विलम्बित वृत्ति में मात्रा पञ्चकला होती है।

## 34. वर्णान्तरं परमाणु ॥ 4॥

वृ - वर्णान्तरं परमाणुमात्रं भवति। तत् कलार्धम्।

व्या - इदानीं वर्णयोर्मध्ये विरामकालः उपदिश्यते। वर्णयोः मध्यं अन्तरं व्यवधानं परमाणुमात्रं भवति। परमाणुमात्रं कलार्धम्।

सू.अ - एक वर्ण के अन्तर का परिमाण परमाणु अर्थात् अर्द्धकला मात्रा होता है।

## 35. स्वरयोरर्धमात्रा ॥ 5॥

वृ - स्वरयोरन्तरमर्धमात्रा भवति।
व्या - स्वरयोः मध्ये अन्तरं अर्धमात्रिकं भवति। अग्न आयाहि, अत्र पूर्वसूत्रेण गकारनकारयोर्मध्ये परमाणु इति। स्वरयोः अकार आकारयोः मध्ये अर्धमात्रा इत्युक्तं भवति। मिणादीनि[2 3] (572)
सू.अ - दो स्वरों के मध्य आधी मात्रा का अन्तर होता है।

## 36. विरामे मात्रा ॥ 6॥

वृ - विरामे अन्तरं मात्रिकं भवति।
व्या - विरामे अन्तरं एकमात्रिकं भवति। पादान्ते एकमात्राकाल व्यवधानम्। अवसाने तत्।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - विराम होने पर वाक्य के अनन्तर एकमात्रा का अन्तर होता है।

## 37. नित्यविरते द्विमात्रम् ॥ 7 ॥

वृ - नित्यविरते द्विमात्रमन्तरं भवति।
व्या - नित्यविरते अन्तरं द्विमात्रिकं भवति। अर्धर्चान्तेषु ।

सू.अ - आधी ऋचा के अन्तर्गत नित्यविराम होने पर दो पदों में दो मात्रा का अन्तर होता है।

## 38. गाथासु ॥ 8 ॥

वृ - गाथासु च द्विमात्रमन्तरं नित्यविरते भवति।

व्या - गाथासु ब्राह्मणेषु च अन्तरं द्विमात्रिकं भवति। नित्यविरते सुब्रह्मण्यो (षड्विंवशब्राह्मणम्1.1)मिति। गाथासु च द्विमात्रमन्तरं नित्यविरते भवति।
उदा - ये नौमिः प्रचरन्ति मानसं काश्मीराः सलिलम्। मदानसः तानश्वपथे वशीकृता युधीन्द्रो दिवि दानवानिव। नैवोदकमस्ति पातवे न पक्षा उत्पतनाय। स्तोममकृपणं वत। सारसो मृगो मण्डूको विललाप। धन्वन्युपचित्रकपाण्डुपलाशक मत्स्यकाङ्क्षहि। जालकाकेन गरणीषु च मत्स्यकामानाहननांसकस्य विदिशानि सामिकम्। ओ$^{4}$ग्नाइ (1) इत्यादीनि।

सू.अ - गाथा में नित्य विराम होने पर दो पदों में दो मात्रा का अन्तर होता है। नोट्- आख्यानपरक पद्य अथवा गान को गाथा कहते है। इस सूत्र के वृत्ति में दोनों प्रकार के उदाहरणों के स्थान दिया गया है। गाथा शब्द का प्रयोग संहिताकाल से होता रहा है। एषा ब्रह्माणमनुगाथा - छा. उ.4.17.9, गाथाभ्यः स्वाहा- तै. सं. 7.5.11.2 )

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 39. त्रिमात्रं सामसु ॥ 9 ॥

वृ- त्रिमात्रमन्तरं सामसु वेदितव्यं भक्त्यन्तेषु।

व्या - सामसु अन्तरं त्रिमात्रं वेदितव्यम्। नित्यविरते भक्त्यन्तेषु।

सू.अ - सामगान में गान के विभाग के अन्त में दो पदों के मध्य तीन मात्रा का अन्तर होता है।

## 40. अकालो ह्रस्वः ॥10॥

वृ- अकारकालो वर्णो ह्रस्वो भवति।

व्या - अकारोच्चारणकालः वर्णः ह्रस्वः। अकारस्य काल एव कालः यस्य, स ह्रस्वः।

उदा - अ इ उ ऋ एते ह्रस्वसंज्ञकाः।

सू.अ - अ, इ, उ, ऋ, लृ ह्रस्व स्वर अकार काल वाले होते है।

इति चतुर्थो दशकः

0-----ॐ-----0

अथ पञ्चमो दशकः

## 41. अर्धमणु ॥ 1 ॥

वृ- अर्धमकारकालो अणु संज्ञो भवति।

व्या - अकारकालः अर्धं भवति। तस्य अणुः इति संज्ञा। स्वरित विनतप्रणताभिगीतेषु।

सू.अ - अर्द्ध अकार का काल अणु संज्ञक होता है।

विशेषः - तदर्धमणु तस्यार्ध परमाण्वभिधीयते (व.प्र.शि,22)। चतुर्भिरणुभिमात्रापरिमाणमिति स्मृतम् (तै.शि,47)। कालोतिसूक्ष्म - -मकोऽणुः स्यात् (व्या.शि,2,33)। अणुर्नाम ह्रस्वकालस्य चतुर्थोऽशः। ह्रस्वस्वरूपं विज्ञेयं चतुर्भिरणुभिस्तथा इति शिक्षाकारवचनात् (तै.प्रा.19.3)।।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 42. मात्रा ॥ 2 ॥

वृ - मात्रा चाकारकालो भवति।

व्या - अकारकालो मात्रा भवति। अकारोच्चारणकालः एकमात्रिकः।

सू.अ - मात्रा अकार कालिक होती है।

विशेषः - चाषस्तु वदते मात्रां द्विमात्रां वायसो ब्रवीत्।
शिखी त्रिमात्रो विज्ञेयः एषः मात्रा परिग्रहः ॥

ऋ.प्रा, 13.50

निमेषकाला मात्रा स्यात् विद्युत्कालेति चापरे।
ऋक्स्वरा तुल्ययोगा वा मतिः स्यात् सोमशर्मणः ॥ ना.शि,
अङ्गुलिस्फोटनं यावान् तावान् कालस्तु मात्रिकः ।

व्या.शि, 3.22

उद्वर्णोर्निमेषमात्रेण यो वर्णः समुदीर्यते।
स एकमात्रो द्विस्तावान् दीर्घस्त्रिप्लुत उच्यते ॥ मा.शि,22

चाषस्तु वदते मात्रां द्विमात्रां चैव वायसः।
शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ॥

पा.शि.49

एकद्वित्रिक्रमेणैव मात्राकालं मनीषिणः।
शब्दैर्निदर्शयन्त्यत्र चाषकालकलादिनाम् ॥

कौ.शि.15

## 43. द्वे दीर्घम् ॥ 3 ॥

वृ - द्वे मात्रे दीर्घं नाम।

व्या - द्वे मात्रे दीर्घसंज्ञं भवति। दीर्घाक्षरस्य द्विमात्राकालः। आ ई ऊ ॠ इत्यादयः ॥

सू.अ - दो मात्रा कालिक स्वर दीर्घ संज्ञक होता है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 44. तिस्रो वृद्धम् ॥ 4 ॥

वृ- तिस्रो मात्रा वृद्धं नाम भवति।

व्या -तिस्रो मात्राः वृद्धसंज्ञाः। वृद्धस्य तिस्रः मात्राः। ओ<sup>4</sup>ग्नाइ।

सू.अ - तिन मात्राकालिकस्वर वृद्धसंज्ञक होता है।

## 45. वैस्वर्ये स्वरास्त्रिमात्राः ॥ 5 ॥

वृ - वैस्वर्ये स्वरस्त्रिमात्रो भवति।

व्या-वैस्वर्ये स्वराः त्रिमात्राः भवन्ति। ओ[1]ऽ234इ[5]-डा। द्युतादीनि (83)

सू.अ - स्वरविकार होने पर त्रिमात्रा कालिक होता है।

## 46. अक्षरम् ॥ 6 ॥

वृ - अक्षरसंज्ञं भवति।

व्या - अकारः अक्षरसंज्ञं भवति। अकारादीनां वर्णानामक्षर शब्देन व्यवहारः। अकारकालो द्विरकारकालो वृद्ध इत्यधिकारः। कृते वर्णोपदेशे सामान्यपृथक्त्वेनाक्षर परिभाषयान्वर्थो धर्मोऽक्षर ज्ञाने। अक्षरपरिमाण सम्बन्धः। द्विस्वरः पर्व। तत्रोद्घातनिघातौ प्रत्युत्क्रमोऽभिगीतं वृद्धिः कर्षणम्।

उदा - अष्टाक्षरेण प्रथमायाः ऋचः प्रस्तौति। द्व्यक्षरेणोत्तरयोः । दशाक्षरं मध्यतो निधनमुपयन्तीति हि ब्राह्मणम् (तां.ब्रा.7.7.1, 2.1.8, 5.1.3) एकवत्त्वेऽभिहिते सर्वप्राप्तिः।

सू.अ - ह्रस्व, दीर्घ, वृद्ध स्वर अक्षर संज्ञक होते है।

## 47. वर्ति ॥ 7 ॥

वृ- अकारादिषु वर्तते व्यञ्जनं वर्ति चाप्यक्षरं भवति।

व्या- अकारादिषु वर्तत इति वर्ति व्यञ्जनं इत्यर्थः। तदपि अक्षरसंज्ञं भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - अकारादि में व्यञ्जन वर्तमान रहते हैं अतः ये अकारादि वर्ति होते है।

## 48. भूयान् ॥ 8 ॥

वृ- भूयांश्च सव्यञ्जनो वर्तित्वेनाक्षरं भवति।

व्या- भूयान् बहुस्थलेषु वर्ति व्यञ्जनमेव क च इत्यादिषु अक्षरसंज्ञं भवति। भूयानित्युक्तत्वात् अवर्ति चापि अक्षरसंज्ञं भवति।

उदा- कारुं[3 1] बिभ्रत्[2र] (486), अग्निन्दूतम्[3 2 3 1] (3) अत्र त् म् इति।

सू.अ - अनेक व्यञ्जनों से युक्त स्वरवर्ति होने से अक्षरसंज्ञक होता है।

## 49. गुरुसणि ॥ 9 ॥

वृ- गुरु संयोगे प्रत्यये भवति।

व्या-लघ्वक्षरं संयोगेप्रत्ययेगुरुभवति। संयोगस्य सण् इति संज्ञा (सू.2-7)

उदा- अग्निः[3 2] (4), अश्वाः[1 2 र] (स्तोभः 1.1), उष्ट्रः, उद्रः, उग्रम्[3 2] (329) अभ्रम्।

सू.अ - संयोग परे रहते पूर्ववर्ती स्वर गुरु होता है।

विशेषः- तु.सू- गुरूणि दीर्घाणि। तथेतरेषां संयोगानुस्वारपराणि यानि (ऋ.प्रा,1.20.21)। तै.प्रा,22.14। वा.प्रा, 4.109। च.अ,2.52, 1.53,54। संयोगे गुरु। दीर्घञ्च (पा.सू, 1.4. 11,12)। दीर्घो विसर्गानुस्वार युक् संयोगपरो गुरुः (हैमप्रकाशः) । दीर्घो गुरुः (सु.व्या. 1.17)।

## 50. घम् ॥ 10 ॥

वृ- दीर्घं च गुरुसंज्ञं भवति।

व्या- दीर्घं अक्षरञ्च गुरुसंज्ञं भवति। ए ओ ऐ औ प्रभृतीनि।

सू.अ - दीर्घ स्वर गुरुसंज्ञक होता है।ए ओ ऐ औ आदि।।

इति पञ्चमो दशकः

**0-----ॐ-----0**

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ षष्ठो दशकः

### 51. उदात्तमुत् ।।1।।

वृ- उदात्तमुत्संज्ञं भवति। उत् इति उदात्तस्य संज्ञा। उच्चमित्यर्थः।
सू. अ - उदात्त की उत् संज्ञा होती है।

विशेषः - उत् ऊर्ध्वस्थानात् आत्तः गृहीतः अथवा उत् उच्चैरादीयते उच्चार्यते उदात्तः। उदात्त शब्दः उत् एवं आपूर्वक दा धातोः क्तप्रत्यये निष्पन्नः भवति ॥ आयामो नाम वायुनिमित्तमूर्ध्वगमनं गात्राणां तेन य उच्यते स उदात्तः (ऋ.प्रा, 3.1 उ.भाष्ये)। आयामो दारुण्यमुरुतार-वस्येति उच्चैः कराणि शब्दस्य। उच्चलक्षणैः य उपलभ्यमानः स्वरः स उदात्तसंज्ञो भवति (तै.प्रा, 1.38 मा.भाष्ये)। समानस्थाने मूर्ध्न आसन्ने उपरिभागे जातेन प्रयत्नेन उच्चार्यमाणः स्वरः उदात्तगुणकत्वात् उदात्तसंज्ञो भवति (तै.प्रा,वै.आ)।

### 52. वान् सन्धिः ॥ 2 ॥

वृ - उदात्तवान् सन्धिरपि उत्संज्ञो भवति।

2 3 2 1 2 3 2 2 3 1 2
उदा - आ इन्द्र सानसिम्। एन्द्र सानसिम् (129)। आ इन्द्र याहि। एन्द्र
3 2 3 2 120 2 3 2 3 2उ 3 2 3 1
याहि (348) आ इत उ नु इन्द्रम्। एतो न्विन्द्रम् (387), उद्घेदभि श्रुता
2 2उ 3 1 2 3 20क 3
मघम् (125), अत्राह गोरमन्वत (147)। उदात्तवानिति किम्? क्व इ
2 0 3 1 2 120 3 2 3 1 203 2
यथ। क्वेयथ क्वेदसि (271), उप उ नु। उपो नु स सपर्यन् (196)।
अत्र उत्संज्ञा नास्ति।
सू.अ - उदात्तस्वरों की सन्धि भी उत्संज्ञक होती है।

विशेषः - शास्त्रे प्राप्ते लोपे च सन्धिः ग्राह्यः (ऋ.तं.वृत्तिः 2.6.2)। पदान्तपदाद्योः सन्धिः (वा.प्रा,3.3)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सर्वप्रकरणव्यापी वर्णमात्रानिमित्तकः।
वर्णो विकारः सन्धिः स्याद् विषयाक्षेपकः क्वचित्॥
(हरिना,1.45)

प्रकृतेः प्रत्ययस्यापि सम्बन्धनियमं बिना।
वर्णसंज्ञानुबन्धी यः कार्यः स सन्धिरुच्यते ॥
(प्रयो.व्या,1.1.65)

सन्धिविधेयककार्यं सन्धिरित्युपचारात्। अनेन संहिता न विकल्प्यते। कि तर्हि ? सत्यमपि संहितायां तदाश्रितं सन्धिकार्यमेव (का.व्या, 1.2.18 एवं 1.1.13 कविराजः)।

**53. आद्यार्धमात्रा स्वरितम्॥ 3॥**

वृ- आद्यार्धमात्रा उत्संज्ञो भवति। तत्स्वरितं नाम॥
व्या-स्वरितमिति षष्ठ्यर्थे प्रथमा। स्वरितस्य आद्या अर्धमात्रा उत्संज्ञा भवति। तत् स्वरितं नाम।
सू.अ - स्वरित की प्रारम्भिक आधी मात्रा उदात्त होती है।

विशेषः - स्वरितशब्दः स्वृ धातोः निष्पद्यते। प्रातिशाख्यशिक्षा तथा व्याकरणग्रन्थेषु उदात्त एवं अनुदात्तयोः समाहारः रूपः कथ्यते। एकाक्षर समावेशे सति पूर्वयोरुदात्तानुदात्तयोः स्वरितः स्वरो निष्पद्यते (ऋ.प्रा, 3.3 उ.भाष्ये)। समाहारः स्वरितः (तै.प्रा,1.40)। समाह्रियत इति समाहारः । तयोर्मेलनजन्यः स्वरः स्वरित इत्यर्थः (तै.प्रा, 1.4 त्रिभाष्ये)। उभयवान्स्वरितः (वा.प्रा,1.110) । आभ्यां प्रयत्नाभ्यां समाहारीभूताभ्यां यः स्वरः उच्चार्यते स स्वरितसंज्ञो भवति (वा.प्रा, 1.110 उ.भा)। उदात्तानुदात्तस्वरसमाहारो योऽच् स स्वरितसंज्ञो भवति। सामर्थ्याच्चात्र लोकवेदयोः प्रसिद्धौ गुणावेद वर्णधर्मावुदात्तानुदात्तौ गृह्येते नाचौ। तौ समाह्रियते यस्मिन्नचि स्वरित इत्येषा संज्ञा विधीयते (पा.सं, 1.2.31 काशिका)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदात्तानुदात्तत्वे च वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञः स्यात् (पा.सू, 1.2.31 सि.कौ,7)। ततश्च उदात्त अनुदात्तश्च अच् समाह्रियमाणः स्वरित इत्यर्थः प्रतीयते...ततश्च उदात्तानुदात्तयोः धर्मयोर्यस्मिन्नचि मेलनं सोऽच् स्वरितसंज्ञकः इत्यर्थः (पा.सू,1.2.31 बा.म.7)।

तस्यादित उदात्तं स्वरार्धमात्रकम् (वा.प्रा, 1.126)। स्वरितस्य स्वरस्यादावुदात्तं ज्ञातव्यं तच्च स्वरार्द्धमात्राकालम्। यद्येकमात्रो यदि द्विमात्रो यदि त्रिमात्रः स्वरस्तथाप्यर्द्धमुदात्तं परमनुदात्तम्। अयं तु स्वरिते उदात्तानुदात्त प्रविभागो द्रष्टव्यः (वा.प्रा, 1.126 उ.भा)।

मात्रिकं वा द्विमात्रिकं वा स्वर्यते यदिहाक्षरम् ।
तस्यादितोऽर्द्धमात्रा वै शेषं तु परतो भवेत् ॥ ना.शि,2.3.6

## 54. उन्नीचेमे ॥ 4 ॥

वृ- उच्ची भवति तत् स्वरितम्।

व्या-स्वरितमित्यनुवर्तते। स्वरितं नीचे प्रत्यये विरामे च उच्ची भवति।

उदा- नि[1] होता[2र] सत्सि बर्हिषि[3 1 2] (1) अत्र सत्सि[3] इति, नीचे प्रत्यये ता[20] इत्यस्य उच्चध्वनिः। सखाय इन्द्रमूतये[1 2 3 1 2 3 1 2] (400), अभि त्वा शूर[3 1 2] नो नुमोऽ[3 1] दुग्धाः[2] (233), इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्[2 3 2 3 1 2 3 1 2] वीर्य्यम्[3क 2र] (412), यदिन्द्र[1 2] चित्र म[3 2 3] इह न (345)। नीचे प्रत्यये , विरामे वा इति किम् ? पाह्यूऽ3त[3 1 2] (36), पुरि चम्वोः[32 3क 2र] (513), इत्यादीनि। अत्र विसर्गपरत्वात् न।

सू.अ - स्वरित के बाद अनुदात्त या विराम हो तो वह स्वरित उदात्त हो जाता है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 55. नीचमुच्चात् ॥ 5 ॥

वृ- नीचमुच्चात् परं स्वर्यते।

व्या-उच्चात्परं नीचं नीचे प्रत्यये स्वर्यते।

1 2र 3 3 1 2 3 2

उदा- अग्ने आ याहि वीतये (1), अत्र वी इति नीचे प्रत्यये याहि इति

2 3 1 2 1 2 1 2 3 3 1

स्वरितम्। अग्न आयाहि(1) वारवन्तम् (17), स्वादिष्ठया (468), अग्ने

2र 2 3 1 2 1 2

स्तोमम् (1405), पान्तमा (155), इन्दो (505), आयाहि (191)

2 3 2 3 2 3क 2र

प्रभृतीनि। नीचे प्रत्यये विरामे वा इति किम् ? जनो न पुरि चम्वोः

(513), अत्र उच्चात्परस्य पु शब्दस्य नीचपरत्वाभावात् न स्वरितत्वम्।

सू.अ - उदात्त से परे अनुदात्त होने पर वह स्वरित हो जाता है।

## 56. संयोगात् ॥ 6 ॥

वृ- संयोगाच्च परं स्वर्यते।

व्या-प्रथमार्थे पञ्चमी । उच्चादित्यनुवर्तते। नीचमिति च। उच्चात्परं

संयोगाक्षरं नीचं स्वर्यते नीचे परे।

3 2 3 3क 2 र 3 3 2 3 3क 2 र 3 3 2

उदा - श्रुष्टि अग्ने- श्रुष्ट्यग्ने (106), अभि एति- अभ्येति (524), अभि

3 2 र 1 2र 3 3क 2 र 3 1

अर्चाम- अभ्यर्चाम (535), योज नु इन्द्र- योजान्विन्द्र (415), पाह्यू३

2 3 1 2 1 2 3 2 2 3 3 2 1

त द्वितीयया (36), मा न इन्द्राभ्या३दिशः (128), विद्धी त्वा३स्य

2 2 3 2 1 2 3 2 1 2

नो वसो (132), पिबा त्वा३स्य गिर्वणः (1393), शग्ध्यू३षु शचीपते

1 2र 3 2 1 2 3 2

(253)। उच्चात्परं इति किम् ? अबोधि अग्निः अबोध्यग्निः (73)।

1 2 3 1 2

नीचमिति अपादु शिप्र्यन्धसः इत्यादि। अत्र प्री इति उच्चात्परत्वेऽपि

अ इत्यस्य नीचत्वाभावात् स्वरितत्वं नास्ति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - उदात्त तथा अनुदात्त के संयोग से स्वरित होता है।

**57.क्वेयहीन्द्रनीवेति ॥ 7 ॥**

वृ-ग्रहणादेतान्यपि स्वर्यन्ते।

2 3 2र 3 1 2र 3 2 3क2र 2

उदा- क्व इयथ- क्वेयथ (271), अधा हि इन्द्र - अधाहीन्द्र (406), नि

3 2र 3 1 2 3

इव - नीव शीर्षाणि मृढ्वम् (1656) । एतेषु यण्सन्धेरभावेऽपि स्वरितप्राप्तिः।

सू.अ - क्व इयथ, हि इन्द्र, नि इव इनमें सन्धि होने पर स्वरित होता है।

**58. तो धे स्तेम् ॥ 8 ॥**

वृ-ग्रहणात् एतान्यपि स्वर्यन्ते।

3 2 3 2 3 2 3 2 3 2 3 3 2 1 2

उदा- दूरादिहेव यत्सतोऽरुणप्सुः (219)। वृधेऽ3स्मान् अवन्तु (239)।

1 2

तेऽमन्वत (606)।

सू.अ - तो, धे और ते के साथ अ की सन्धि होने पर स्वरित होता है।

**59. नैगिनोभयथा ॥ 9 ॥**

वृ- उभयथा नैगिना प्रोक्तम्।

व्या-नैगिमहर्षिणा तो धे स्तें एतानि त्रीणि उभयप्रकारेणापि अभिमतानि। उदात्तं स्वरितं वा इति।

सू.अ - आचार्य नैगि का मत है कि उदात्त अथवा स्वरित दोनों हो सकते हैं।

**60. न्यायेनौदव्रजिः ॥ 10 ॥**

वृ- न्यायेनौदव्रजिराचार्यो मन्यते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या-औदव्रजिः आचार्यः यत्र उच्चानुच्चसन्धिः तत्र उच्च एव कार्यः इ[illegible] न्यायेन तो धे स्तें इत्यत्र उदात्तमेव भवतीति मन्यते।

सू.अ - औदव्रजि के अनुसार सामान्यः उदात्त की सन्धि से उदात्त स्व[illegible] ही होता है।

इति षष्ठोदशकः

इति द्वितीयः प्रपाठकः

ॐ-----0-----ॐ-----0-----ॐ



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ तृतीयः प्रपाठकः

### 61. तस्मादुच्चश्रुतीनि ॥ 1 ॥

वृ-तस्मात् स्वरितात् पराणि उदात्तश्रुतीनि भवन्ति, नीचे प्रत्यये विरामे वा।

उदा- अभि (3) त्वा (1) शूर (2) नो नुमः (3) (233), शूर इत्यादीनां हव्यदातये (3 1 2) (1) अत्र तये इति तेषां प्रचय इति संज्ञा। आ जाता सुक्रतो (3 1 2) पृण (52), इन्दुरिन्द्राय (2 3 1 2) धीयते (489), सुता विदथे (3 2) अक्रमुः (3 1 2) (477) नीचे प्रत्यये इति किम्? देवेभिर्मानुषे जने (3 2 3 1 2 3 1 2)(2), अत्र षे शब्दस्य उच्चपरत्वात् प्रचयत्वं नास्ति। विरामे इति किम् ? अभि (3) त्वा (1) शूर (2) नो नुमो (3 1) अत्र नु शब्दस्य विरामप्रत्ययाभावात् प्रचयत्वं न। पवित्रे चम्वोः सुतः (3 1 2 3क 2 र 3 2) (490), सखायो (1 2) दीर्घजिह्व्यम् (3क 2र) (545)।

सू.अ - स्वरित के परवर्ती अनुदात्तों का उच्चश्रुति स्वर होता है।

विशेषः- उच्चश्रुतेः स्वरुपम्-

स्वरितात्परमनुदात्तमेकमनेकं वाक्षरमुदात्तवत् एकश्रुत्या उच्चारणीयं स्यात्। अयमेव प्रचयः प्रचितः प्रचो निचित उदात्तमय इति वैदिकैर्व्यवह्रियते (गोडशे शङ्करबालकृष्णः प्रा.प्र.शि.शि.सं.पृ 2.16)। ऐकश्रुत्यं प्रचयनामकं भवति (ऋ,1.1.1 सायणभाष्ये)। उदात्तानुदात्त-स्वरितानां परः सन्निकर्ष ऐकश्रुत्यम् (ऋ.प्रा,3.19)

य एवोदात्त इत्युक्तः स एव स्वरितात् परः।
प्रचयः प्रोच्यते तज्ज्ञैः न चात्रान्यत् स्वरान्तरम्।।
(ना.शि,1.8.2)

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 62. पदमेकोच्चम् ॥ 2 ॥

1 2 0

वृ-पदमेकोच्चं भवति। अग्ने (1) प्रभृतीनि। पदे एकमक्षरं उदात्तं भवतीत्युत्सर्गः।

सू.अ - एक पद में एक ही अक्षर उदात्त होता है।

## 63. प्रकृतिः ॥ 3 ॥

वृ-प्रकृतिश्चापि पदं भवति। पद प्रकृतिकः संहितापाठः इति।

सू.अ - प्रकृतिः अर्थात् धातु भी पद होती है।

## 64. मान्विकारः ॥ 4 ॥

वृ-प्रकृतिमान् विकारो भवति। उदा- दण्डाग्रादीनि।

सू.अ - विकार प्रकृति युक्त होता है।

## 65. समासे ॥ 5 ॥

वृ-समासपदे च एकमक्षरं उदात्तं भवति।

3 1 2 3 2 3

उदा - हव्यदातये। हव्य- दातये (1) प्रभृतीनि।

सू.अ - समास में एक ही अक्षर उदात्त होता है।

## 66. विभक्तिलोपः ॥ 6 ॥

वृ- विभक्तिलोपश्च समासे भवति।

व्या-विभक्तिलोपश्च समासपदे भवति। विश्ववेदसं, राजपुरुषः इत्यादि लौकिके च पाण्डुकम्बलः, मत्तहस्तीति प्रथमा लुप्यते षष्ठी च। द्वन्द्वसमासे। शिववैश्वानरौ। स्कन्दविशाखौ। नारदपर्वतौ। उशनाबृहस्पती इति। गणसमासः कौण्डिन्यवनस्पतिषु। चातुर्वर्ण्ये च। बहुवचनम् साल्वशरदण्डादीनि। वाक्यसमासोदाहरणम्। पुरुषशतं माणवकोदकमानय। गां चित्रामभ्यागच्छेति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - समास में विभक्ति लोप होता है।

(संहिता लक्षणम्)

## 67. सन्निकर्षः संहिता ॥ 7 ॥

वृ- सन्निकर्षः संहिता भवति। पदस्येत्यधिकारः।

व्या-पदानां सन्निकर्षः संहिता भवति। सन्निकर्षो नाम आनन्तर्यम्। उदा- अबोध्यग्निः (73), साम्नि। सः सुन्वेयोवसू प्रभृतीनि (582), दधिमध्वत्रेति सन्निकृष्टमिति चेत् ? यः परः सन्निकर्षो नान्तरेण विकारम्। को नाम विकारः ? शास्त्रप्राप्ते लोपे च सन्धिर्ग्राह्यः।

सू.अ - पदों का आनन्तर्य अर्थात् अत्यन्त सान्निध्य संहिता होता है।

विशेषः-संहितायाः लक्षणं एवमुक्तम्- परः सन्निकर्षः संहिता (नि,1.6)। पद नैरन्तर्ये संहिताव्यवहारस्तथैकपद्येऽपि वर्णनैरन्तर्ये (म.भा,1.4.1,9 कैयट)। पूर्वमक्षरं पूर्वरुपमुत्तररूपं योऽवकाशः। पूर्वरुपोत्तररूपे अन्तरेण सा संहितेति (ऐ.आ,3.1.5)। पदान्तान्पदादिभिः सन्दधदेति यत्सा कालाव्यवायेन (ऋ.प्रा,2.2)। वर्णान्तराव्यवहितयोर्द्वयोर्वर्णयोः सुसन्निकर्षो भवति। स हि निरतिशयमानन्तर्यम्। अर्धमात्राकालेनाव्यवायः संहितोच्यते (का.प, 1.95 श्रीपदि दत्त)। तैत्तिरीयप्रातिशाख्यानुसारेण अथ संहितायामेकप्राणभावे (तै.प्रा,5.1) तथैव वर्णानामेकप्राणयोगः संहिता इति (वा.प्रा,1.158)।

## 68. नवृद्धं रे ॥ 8 ॥

वृ- न वृद्धं स्वरे प्रत्यये सन्निकृष्यते।

व्या-पूर्वसूत्रस्यापवादोऽयम्। वृद्धमक्षरं स्वरे प्रत्यये न सन्निकृष्यते। सन्निकर्षो न भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 62. पदमेकोच्चम् ॥ 2 ॥

वृ-पदमेकोच्चं भवति। अग्ने (1) प्रभृतीनि। पदे एकमक्षरं उदात्तं भवतीत्युत्सर्गः।

सू.अ - एक पद में एक ही अक्षर उदात्त होता है।

## 63. प्रकृतिः ॥ 3 ॥

वृ-प्रकृतिश्चापि पदं भवति। पद प्रकृतिकः संहितापाठः इति।

सू.अ - प्रकृतिः अर्थात् धातु भी पद होती है।

## 64. मान्विकारः ॥ 4 ॥

वृ-प्रकृतिमान् विकारो भवति। उदा- दण्डाग्रादीनि ।

सू.अ - विकार प्रकृति युक्त होता है।

## 65. समासे ॥ 5 ॥

वृ-समासपदे च एकमक्षरं उदात्तं भवति ।

उदा - हव्यदातये। हव्य- दातये (1) प्रभृतीनि।

सू.अ - समास में एक ही अक्षर उदात्त होता है।

## 66. विभक्तिलोपः ॥ 6 ॥

वृ- विभक्तिलोपश्च समासे भवति।

व्या-विभक्तिलोपश्च समासपदे भवति। विश्ववेदसं, राजपुरुषः इत्यादि लौकिके च पाण्डुकम्बलः, मत्तहस्तीति प्रथमा लुप्यते षष्ठी च। द्वन्द्वसमासे । शिववैश्वानरौ । स्कन्दविशाखौ । नारदपर्वतौ । उशनाबृहस्पती इति। गणसमासः कौण्डिन्यवनस्पतिषु । चातुर्वर्ण्ये च । बहुवचनम् साल्वशरदण्डादीनि। वाक्यसमासोदाहरणम्। पुरुषशतं माणवकोदकमानय। गां चित्रामभ्यागच्छेति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - समास में विभक्ति लोप होता है।

(संहिता लक्षणम्)

**67. सन्निकर्षः संहिता ॥ 7 ॥**

वृ- सन्निकर्षः संहिता भवति। पदस्येत्यधिकारः।

व्या-पदानां सन्निकर्षः संहिता भवति। सन्निकर्षो नाम आनन्तर्यम्। उदा- अबोध्यग्निः (73), साम्नि। सः सुन्वेयोवसू प्रभृतीनि (582), दधिमध्वत्रेति सन्निकृष्टमिति चेत् ? यः परः सन्निकर्षो नान्तरेण विकारम्। को नाम विकारः ? शास्त्रप्राप्ते लोपे च सन्धिर्ग्राह्यः।

सू.अ - पदों का आनन्तर्य अर्थात् अत्यन्त सान्निध्य संहिता होता है।

विशेषः-संहितायाः लक्षणं एवमुक्तम्- परः सन्निकर्षः संहिता (नि,1.6)। पद नैरन्तर्ये संहिताव्यवहारस्तथैकपद्येऽपि वर्णनैरन्तर्ये (म.भा,1.4.1,9 कैयट)। पूर्वमक्षरं पूर्वरूपमुत्तररूपं योऽवकाशः। पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति (ऐ.आ,3.1.5)। पदान्तान्पदादिभिः सन्दधदेति यत्सा कालाव्यवायेन (ऋ.प्रा,2.2)। वर्णान्तराव्यवहितयोर्द्धयोर्वर्णयोः सुसन्निकर्षो भवति। स हि निरतिशयमानन्तर्यम्। अर्धमात्राकालेनाव्यवायः संहितोच्यते (का.प, 1.95 श्रीपदि दत्त)। तैत्तिरीयप्रातिशाख्यानुसारेण अथ संहितायामेकप्राणभावे (तै.प्रा,5.1) तथैव वर्णानामेकप्राणयोगः संहिता इति (वा,प्रा,1.158)।

**68. नवृद्धं रे ॥ 8 ॥**

वृ- न वृद्धं स्वरे प्रत्यये सन्निकृष्यते।

व्या-पूर्वसूत्रस्यापवादोऽयम्। वृद्धमक्षरं स्वरे प्रत्यये न सन्निकृष्यते। सन्निकर्षो न भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदा- सो अर्षेन्द्राय (980)। श्रुधीहवन्तिरश्च्या इन्द्र (346), मिणा अव्यं वारम् (572), भरा इन्द्र ज्यायः (309), म धारया आपो (511) ष्णो आगा 3 ही (347), सो3 आश्वा3 या (482), अयं पूषादीनि (546)। वृद्धमिति किम्? शविष्ठधृष्णवागहि (347) आजिष्वादीनि (411, स्वाजिषूतिम्)।

सू.अ - वृद्ध स्वर परवर्ती स्वर के साथ सन्निकर्ष नहीं प्राप्त करता। अर्थात् इनमें सन्धि नहीं होती।

(प्रकृतिभावः)

## 69. दमु ॥ 9 ॥

वृ-उकारं पदं न सन्निकृष्यते।

उदा- तं उ अभि तमु अभिप्रगायत (382)। इत्थमु आ (305) तस्मा उ अद्य (272) उ पदमिति किम्? त्वां वृत्रेषु इन्द्र-त्वां वृत्रेष्विन्द्र (234)।

सू.अ - पद रूप उकार परवर्ती स्वर के साथ सन्निकृष्य नहीं होता।

विशेषः- पद भूत उकार प्रकृतिभाव से रहता है। यथा-
तम् । ऊँ इति । अभि- तमु अभि। इत्थम्। ऊँ इति। आ- इत्थमु आ। तस्मा। उँ इति। अद्य- तस्मा उ अद्य। अत्र उ स्वतन्त्रपदः । उपर्युक्तसूत्रेण एतेषां संहितारूपं न निष्पन्नम्।

तुलनात्मकसूत्रम्- आर्ष्यामेव सन्ध्ययकारपूर्वो विवृत्तेश्च प्रत्ययः सन्नुकारः (ऋ.प्रा,2.56)। उकारोऽपृक्तः प्रकृत्या वकारोऽन्तरे। न तत्तस्मात्सांहितः (तै.प्रा,9.16,17)। उकारोऽपृक्तो स्पर्शात् (वा.प्रा, 4.89) निपात एकाजनाङ् (पा.सू, 1.1.14)। केवल उकार स्वरपूर्वः (च.अ,3.36)।

## 70. ओभूतञ्च ॥ 10 ॥

वृ - ओभूतञ्च उ पदं न सन्निकृष्यते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



3 2 3 2 3 3 2 2र 3 2 3 2
उदा - दोषा - उ - आ- अगात् । दोषो आगात् (177) । एषा - उ- उषाः ।
3 2 3 1 2 3 1 2 3
एषो उषाः (178), प्र- उ - अयासीत् । प्रो अयासीत् (557) ।

सू.अ - ओकार प्राप्त उ पद परवर्ती स्वर के साथ सन्निकृष्ट नहीँ होता ।

विशेषः- अत्र अस्थनामिनी सन्ध्यम् इत्यनेन सूत्रेण ओकारप्राप्तः उ पदस्य परवर्ति स्वरेण साकं संहिता न जातम् ।
तु.सू- अपूर्व पदान्तग (ऋ.प्रा,1.70) । ओकारश्च पदान्तेऽनवग्रहः (वा.प्रा,1.94) । ओत् (पा.सू,1.1.15) । ओकारान्तश्च (च.अ,1.8) ॥

इति प्रथमो दशकः

0-----ॐ-----0

अथद्वितीयो दशकः

## 71. आऽऽणि ॥ 1 ॥

वृ- आकारः पादादौ प्रत्यये न सन्निकृष्यते ।
व्या-पादादेः अण् इति संज्ञा । आकारं पदं अणि पादादौ प्रत्यये न सन्निकृष्यते ।
3 1 2 3 1 2र3 1 2र 1 2र 1 2र
उदा- कदा वसो स्तोत्रं हर्यत आ अव (228) । अत्र हर्यते-आ- अव इति
2 3 2 1 2र 1 2 3 1 2 3
पदपाठः । एवं कः-इमं-नाहुषीषु (190), यदिन्द्र नाहुषीषु (262)
3 2 3 1 2र 3 2 3 1 2
इत्यादौ । पदमिति किम् ? पुनानः - सोम- धारया - अपः । पुनानः सो
3 1 2 3 1
म धारायाऽपो (511), अत्र आकारः सन्निकृष्यते । अणि इति किम् ?
3 2 3 2 1 3 3 1 2र
दिवः-पृष्ठानि-आ-अरुहन् । पृष्ठान्यारुहन् (92) आदीनि । दधन्वाँ यो नर्यो 2प्सु वन्तरा उ । वा 23 (512)

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - आकार पादादि स्वर के साथ सन्निकृष्ट नहीं होता।

विशेषः- अत्र आकारस्य पादादित्वात् इ,अ,ओ स्वराणां संहितारूपं न सिद्ध्यति। तु.सू- प्लुत प्रगृह्या अचि (पा.सू,6.1.125)

(प्रकृतिभावस्य अपवादसूत्रम्)

**72. न वन्वा च ॥ 2 ॥**

वृ-सन्निकृष्यते। दमु इत्यनेन प्राप्तस्य अपवादोऽयम्।

3 2 3 2 3 1 2 3 2 3 2 3 1 2
उदा - इत्थम्- उ - आत् - उ - अन्यथा । इत्थमु आद्वन्यथा (305)। अत्र उ अन्यथा इति सन्निकृष्यते द्वन्यथेति। तथा किं उ वायुनं इति।

सू.अ - वन् वा पद सन्निकर्ष को प्राप्त होते है।

**73. औ ॥ 3 ॥**

वृ- औकाराश्च सन्निकृष्यते ।

व्या-समनन्तरसूत्रेण मातरौ इत्यस्य सन्निकर्षाभावप्रसक्तौ तदपवादः अयं औकारश्च सन्निकृष्यते।

3 1 2 3 1 2 23 3 1 2 3 2 3 2 3 2
उदा- न-यः-मातरौ-अन्वेति। न यो मातरावन्वेति (64), यौ - आहुः।
2 3 2 3 2 3 1 2
यावाहुः सयुजाविति (361)।

सू.अ - औकार परवर्ती स्वर के साथ सन्निकर्ष को प्राप्त होता है।

विशेषः- अत्र औकारस्य परवर्तिस्वरेण साकं सन्ध्यमयवायावम् सूत्रेण आव् प्राप्य संहितारूपं निष्पन्नम्। तु.सू- एकारोऽयम्। औकार आवम् (तै.प्रा.9.11,15)। सन्ध्यक्षरमयवायावम् (वा.प्रा,4.46)। एचोऽयवायावः (पा.सू. 6.1.78)। सन्ध्यक्षराणामयवायावः (च.अ.3.40)

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 74. द्व्यर्थे ॥ 4 ॥

वृ-द्व्यर्थे च न सन्निकृष्यते।

व्या- अत्र न वन्वा च (72) सूत्रात् न इत्यनुवृत्तिः। द्विवचनपदे सन्निकर्षो न सम्भवति।

उदा- इन्द्राग्नी (281) अपात्। उभे यदिन्द्र रोदसी आप (379), उभे शची (उभे अनु 1425)। द्व्यर्थे इति किम्? वर्मी -इव। वर्मीव धृष्णवा रुज (585)।

सू.अ-दो पदार्थों के वाचक पद का स्वर परवर्ती स्वर के साथ सन्निकर्ष को नहीं प्राप्त कर सकता।

विशेषः- अत्र इन्द्राग्नी पदात् इन्द्र तथा अग्नेः तथैव रोदसी पदात् द्यावा पृथिवी अर्थस्य अभिव्यक्तित्वात् द्व्यर्थकं पदं भवति। अतः पदद्वयस्य परवर्तिस्वरेण साकं संहिता न भवति।

इन्द्राग्नी -इन्द्र। अग्नीइति। अपात्। उभेयदिन्द्ररोदसी आप-उभे इति। यत्। इन्द्र। रोदसी इति। आपप्राथ।

तु.सू- षष्ठादयश्च द्विवचोऽन्तभाजस्त्रयो दीर्घाः (ऋ.प्रा,1.71)। एकारेणोकारा द्विवचनान्ताः (वा.प्रा,1.93)। ईदूदेद्विवचनं प्रगृह्यम् (पा.सू,1.1.11)। द्विवचनान्तो (च.अ,1.76)।

(प्रकृतिभावः)

## 75. ई न वपरे ॥ 5 ॥

वृ- ईकारस्य द्वैधं न वपरे एव न सन्निकृष्यते।

व्या- ईकारः नवपरे प्रत्यय एव न सन्निकृष्यते। वकारः परे यस्य तत् वपरं, न वपरं तस्मिन् नवपरे । इन्द्राग्नी आगतमित्यादौ वपरत्वाभावान्न सन्निकृष्यते। मही इव अत्र वपरत्वात् महीवकृत्तिः शरणा इति सन्निकर्षो भवति। निवृत्तानि। उपधीव, प्रधीव, चर्मणीव, दम्पतीव, वाससीव।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ -व परे होने पर संयुक्त ईकार सन्निकर्ष को प्राप्त नहीं होता।

**76. अयवावे न्यूने ॥ 6 ॥**

वृ- एकारोकारौ अकारप्रत्यये न्यूने पादे न सन्निकृष्यते।

व्या-अयवादेशेन सूत्रमिदम्। एकारः ओकारश्च न्यूने पादे नवपरे अकारे प्रत्यये न सन्धीयते।

1 2 3 1 2
उदा - एकारस्य नमस्ते अग्न ओजसे (11), अत्र अकारस्य प्रश्लेषत्वे
3 1 2र 1 2र
सति न्यूनपादत्वं स्यात्। वायोरनीके अस्थिरन् (13), न तत्ते अग्ने
1 2 3 1 2 1 2 3 1 2 3 1
(53)। ओकारस्य प्रेष्ठं वो अतिथिम् (5), त्वन्नो अग्ने (6), वृषो अर्वाव
2 1 2 3 3 1 2
ति (263), मधो अर्षन्ति (485), यज्ञायज्ञीयादीनि (35 वो अग्नये)।
1 2 3 2 3 3 1 2
एकारोकाराविति किम् ? श्रुतकक्षारम् (118) अरं गवे अत्र सन्धीयते।
1 2र 3 2 1 20 2 3 1 2 3
अकारे इति किम् ? अग्ने -इत्था- इतराः। अग्न इत्थेतरा (7)। न्यूने इति
1 2 3 1 2 3 1 2 3 1 3 1 2
किम् ? पादोऽस्य सर्वा भूतानि (619) घ्नता वाम (305 णों शु), पादोऽ
3 1 2 3 1 2 3 2
स्येहाभवत् (618)। नवपरे इति किम्? वृषजूतिर्नोऽविता (263) अत्र
3 1 2 3 1 2
ओकारस्य वपरत्वात्सन्धिः। अयं वामह्वेऽवसे (304), सोऽवथा (ऋ.वे
3 2उ 3 1 2 3 1 2 1 2
4.36.5), स्थूरं न कच्चिद्भरन्तोऽवस्यवः (408), प्र नोऽविषत् (411),
1 2 3 1 2 3 2 2 3 2 3 1 2
यदिन्द्र शासो अव्रतम् (298), अधि सानो अव्ये (532)।
त्रिरक्रान्तग्रहणात् ? अक्रान्तसमुद्र इत्यत्र त्रीणि उदाहरणानि वर्तन्ते।
(सामराजम्, वैश्वज्योतिषम्, वात्सप्रम्)

सू.अ - पाद के मध्य में वर्तमान एकार तथा ओकार, अकार के साथ सन्निकर्ष को प्राप्त नहीं होते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विशेषः- अत्र पादमध्ये अवस्थिततत्वात् ए तथा ओ वर्णस्य परवर्ती

120 3

अकारेण साकं संहितारूपं न भवति। उदाहरणत्वेन- नमः- ते- अग्ने।

1 2 3 3 2 1 2र 3 3 1 2र

नमस्ते अग्ने ॥(1) वायोः- अनीके- अस्थिरन्। वायोरनीके अस्थिरन् ॥

3 1 2र 12र 3 1 2र

(13) न- तत्- ते-अग्ने। न तत्ते अग्ने ॥(53) प्रेष्ठम्-वः - अतिथिम्।(5)

1 2 3 1 2

प्रेष्ठं वो अतिथिम् इत्यादि।

## 77. त्रोऽणि ॥ 7 ॥

वृ- त्रो शब्दः पादादौ प्रत्यये न सन्निकृष्यते।

व्या- त्रो शब्दः अणि पादादौ प्रत्यये न सन्निकृष्यते।

2 3 2 3 2 3 2 3 3 2 3 1 2

उदा- भगो न चित्रो अग्निर्म (449)। त्रो इति किम् ? अग्निं राये पु

3 23 3 1 2 3 1 2 3 1

रुमीढ श्रुतन्नरोऽग्निः सुदीतये (49)। अत्र रोऽग्निः इति सन्निकर्षः।

2 3 1 2र 3 1 2 3 1 2 3 1 2

निवृत्तानि एह्यू षु ब्रवाणि तेऽग्ने (7), अभि त्वा शूर नोनुमोऽदुग्धा इव (233)

सू.अ-त्रो परवर्ती पादादि स्वर के साथ सन्निकर्ष को नहीं प्राप्त करता।

## 78. नृतोपवोऽङ्गि ॥ 8 ॥

वृ- सन्निकृष्यते।

व्या- पूर्वोक्तस्यापवादः। न्यूने पादे सन्निकर्षो भवति।

2 3 1 2र 3 1 2 3 1 2र 3

उदा - नृतोप -तवत्यं नर्यं नृतोऽप इन्द्र । पदपाठः- नृतो। अपः। इन्द्र।

1 2र 3

(466)। वोऽङ्गि-त्वं विप्रो अभवोऽङ्गिरस्तम । पदपाठः- अभवः। अङ्गिरस्तम (519)।

सू.अ- अप परे रहते नृतो का ओकार तथा अङि परे रहते वो का ओकार सन्निकर्ष को प्राप्त करता है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 79. गो ॥ 9 ॥

वृ- गो शब्दश्च सन्निकृष्यते।

उदा- गोऽग्रम्। गोऽश्वम् ।

सू.अ - गो शब्द परवर्ती स्वर से सन्निकृष्ट होता है।

## 80. न वा ॥ 10 ॥

वृ- न वा सन्निकृष्यते एव वा।

व्या- गो शब्दः न सन्निकृष्यते वा।

उदा - गो अग्रम्। गो अश्वम्। गोऽजिनम्। गोजिनीकम्। तेन विकल्पः।

सू.अ-विकल्प से गो शब्द परवर्ती स्वर से कभी सन्निकर्ष को प्राप्त नहीं करता है और कभी सन्निकृष्ट भी हो जाता है।

विशेषः- तु.सू- सर्वत्र विभाषा गोः (पा.सू,6.1.122)

इति द्वितीयो दशकः

0-----ॐ-----0

अथ तृतीयो दशकः

(अपवादसूत्राणि)

## 81. अवं वा ॥ 1 ॥

वृ- अवं वा आपद्यते।

व्या- गो शब्दः अवादेशं वा आपद्यते असवर्णे अचि परे।

उदा-गो अग्रं- गवग्रम्। गो अश्वम्- गवश्वम्। गो अजिनम्-गवजिनम्। गवजिनीकम्।

सू.अ-विकल्प से गो पद का ओकार परवर्ती स्वर के साथ मिलकर अव हो जाता है।

विशेषः- तु.सू- अवङ्स्फोटायनस्य (पा.सू,6.1.123)

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 82. त्वे ॥ 2 ॥

वृ- त्वे शब्दश्च न सन्निकृष्यते।

व्या- त्वे शब्दश्च अकारे परे न सन्निकृष्यते। त्वे[1] अग्ने[2] स्वाहुत (38)। सिद्धग्रहणात्सामर्थ्यग्रहणम्। निवृत्तानि । यजतं[2 3 1 2] त आदीनि (75)।

सू.अ - त्वे शब्द परवर्ती स्वर के साथ सन्निकर्ष को प्राप्त नहीं करता है

विशेषः- तु.सू- अस्मे युग्मे त्वे अमी च प्रगृह्या (ऋ.प्रा,1.73)। त्वे इत्यनिंग्यान्तः (तै.प्रा,4.10)। चम् अस्मे त्वे (वा.प्रा,1.98)

(अकारलोपः)

## 83. लुबन्यः ॥ 3 ॥

वृ- लुप्यते अन्यः अकारः।

व्या- इदानीं सन्निकर्षस्थले अकारलोपः उच्यते। अन्यः उत्तरपदादि रकारः लुप्यते। पादोऽस्य[1 2] सर्वा[3 1 2] (619) प्रभृतीनि।

सू.अ - परवर्ती अकार का लोप हो जाता है।

विशेषः- विनाशो लोपः (तै.प्रा,1.57। वर्णस्यादर्शनं लोपः (वा.प्रा. 1.141)। दृशिधातुरुपलब्धिवचनः। अनुपलब्धिदर्शनं वर्णस्य लोप इत्युच्यते (वा.प्रा,1,141 उ.भा)। लोपः स्यादप्यदर्शनम् (व्या.शि,10)। अदर्शनं लोपः (पा.सू,1.1.60)। अदर्शनमश्रवणमनुच्चारणमनुपलब्धिरभावो वर्णविनाश इत्यनर्थान्तरमेतैः शब्दैर्योर्थोभिधीयते तस्य लोप इतीयं संज्ञा भवति (पा.सू,1.1.60 काशिका)।

तु.सू- (नि,2.1)। ऋ.प्रा,4.80,14.12। तै.प्रा,8.16,9.1,19.22। वा.प्रा, 1.57,2.14। प्रत्ययस्य लुक्श्लुलुपः (पा.सू,1.1.61 एवं 2.4.75)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(इतिकरणलोपः)

## 84. पूर्ण इति करणाभ्यस्ते ॥ 4 ॥

वृ- पूर्णे पादे इति करणाभ्यस्ते इति शब्दः लुप्यते।

3 1 2 3 1 2 3 2 3 1 2 3 1 2 3
उदा-महीइति-यज्ञस्य । मही यज्ञस्य (117)। एवं घृतवती (378) इति।

1 2 3 2 3 1 2 2 3 2 3 2 3 1 2
पूर्णे पादे इति किम्? प्रप्र वयममृतम्(35), यावाहुः सयुजाविति (361)। अत्र इति शब्दलोपेन पादस्य अपूर्णत्वं वक्तव्यम्।

सू.अ-पाद के पूर्ण होने पर इतिकरण तथा अभ्यस्त का लोप हो जाता है।

(अपवादसूत्रम्)

## 85.ऋति ॥ 5 ॥

वृ- ऋति च प्रत्यये न सन्निकृष्यते।

व्या- अणि (77) इत्यनुवर्तते। पादादौ ऋति प्रत्यये परे न सन्निकृष्यते।

1 2र 3 1 2
उदा- प्र मँहिष्ठाय गायत ऋताव्ने (107)। अत्र त इत्यस्य ऋत् परत्वात्

3 2 3 1 2 3 2 1 2 3 1 2
न सन्निकर्षः। अणि, इति किम् ? अभि -ऋतस्य । अभ्यृ3तस्य सुदुघा। (556)

सू.अ - स्वर के बाद ऋत पद हो तो सन्निकर्ष नहीं होता।

## 86. ओजि ॥ 6 ॥

वृ- ओजि च प्रत्यये न सन्निकृष्यते।

व्या- अणि इत्यधिकारः। पादादौ ओजि प्रत्यये न सन्निकृष्यते।

1 2 3 1 2 3 1 2 3 1 2 3 1 2 3 1 2 3 1 2
उदा- त्वन्न इन्द्रा भर ओजो नृम्णम् (405), इन्द्र ज्येष्ठं न आ भर ओजि

2र 1 2र
(586), अणि इति किम्? अमितौजा अजायत (359) । अत्र अमित-

3
ओजाः इति पदं तत्र सन्धिः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - स्वर के बाद ओजि पद हो तो सन्निकर्ष नहीं होता।

विशेषः- तु.सू- ऐकारौकारपरौ च कण्ठ्यौ लुशादर्वाक् (ऋ.प्रा,2.62)

### 87. शकन्धुकादीनाम् ॥ 7 ॥

वृ- शकन्ध्वादि गणपठितानां सन्निकर्षप्रतिषेधः।

3 1 2
उदा- शक अन्धुकः। कः ईम्। अक्षपा असि। वपा इव त्मना। अनेहस (62), सुपथा अकृण्वन्॥
सू.अ - शक अन्धुक आदि पद सन्निकर्ष को प्राप्त नहीं होते।

विशेषः- तु.सू- एङि पररूपम् (पा.सू,6.1.94)। शकन्ध्वादिषु पररूपं वाच्यम् (पा.सू,6.1.94 वार्तिकम्)

### 88. कि इन्वी उत् ॥ 8 ॥

वृ- एतावपि न सन्निकृष्येते।

1 2 3 1 2र3 2 3 2 120
उदा- न कि इन्द्र त्वदुत्तरम्(203)पदपाठः - न-कि-इन्द्र- त्वत्-उत्तरम्।

1 2 3 1 2 3 2 3 2 3 2 3 2
अदितिः सिन्धुः पृथिवी उत द्यौः (590)। पदपाठः - पृथिवी -उत- द्यौः।

सू.अ - कि इन् तथा वी उत् परस्पर सन्निकृष्ट नहीं होते।

### 89. स्मिन् व्रज्मन् यम् ॥ 9 ॥

वृ- एतावपि न सन्धीयते।

1 2 3 1 2 3 2 1 2र 3 1 2 3 2
उदा- यस्मिन् व्रतान्यादधुः (47) यस्मिन्। व्रतानि। आ। दधुः॥ उपज्मन्

1 2र 3 1 2 3 12र 3 2 1 20
यं विप्रासो वाजयन्ते (337)पदपाठः- उप। ज्मन्। यम्। विप्रासः॥

सू.अ - स्मिन् व्र ज्मन् यम् सन्निकृष्ट नहीं होते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 90. महुं युक् ॥ 10 ॥

वृ- मकारो हिंकारयुक्तो न संनिकृष्यते।

व्या- हकारयुक्तो मकारः न सन्धीयते। इदं सामसु भवति।

उदा- विशो विशो हिम् वो॰6 अतिथाइम् (87)। अग्ने वाजस्य गोहिम् मतो होहाइ (99)। स्वादिष्ठया (औहोहुम् हाएहिया468), इन्दुः पविष्ठ (481), सृजादा॰23श्वाम् (हु म्॰3हुम् ) च । अपा3म्। हुम्॰23वा॰3 (584)। इति सम्मील्ये हिम्मादीनां क्रमः। विशेषाद् वमौ च दीर्घानुस्वारमयौ। मकारकरणाश्च श्यैते (235 हिम्माये॰3), मकाराकरणे न वर्तन्ते। तद्वच्चैवाचार्यस्य नकुलमुखस्य वचनं श्रूयते। प्रक्रमते मकारकरणेन ततो हकारादिमनुस्वारं गायति ततो मकारः इति नकुलमुखः।

सू.अ - हिंकारयुक्त मकार सन्निकर्ष को नहीं प्राप्त करता।

इति तृतीयो दशकः

**0-----ॐ-----0**

अथ चतुर्थो दशकः

(व्यवधानः -आगमः)

## 91. विकारः ॥ 1 ॥

वृ- विकारश्च सन्निकर्षो न भवति। नैव वृत्तेनापि प्राग् लोपागमप्रकृतिभावश्च विकारः।

व्या-विकारश्च न सन्धीयते। यस्मिन् स्थले यो वर्णः विकारमापन्नः तस्मिन् स्थले सन्धिः न भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



1 2र 3 2 3 1 2
उदा- अग्ने-आ-याहि। अग्न आ याहि। अत्र विकारः अय् इत्यत्र य् लोपरूपः। (लोप,आगम,प्रकृतिभावश्च विकारः इति पाठभेदः)

सू.अ - विकार का सन्निकर्ष नहीँ होता है।

### 92. सस्थानः ॥ 2॥

वृ- विशे नि शब्द प्रयोगे। सस्थानः सविकारो विज्ञेयः। विशेषस्थानान्तरं वा। यथानन्तरं वा।

व्या- पूर्वोक्तो विकारः द्विविधः। सस्थानः स्थानान्तरमापन्नश्चेति। उभयोः लक्षणं वक्ष्यते।

सू.अ - विकार सस्थानीय होता है।

(सवर्णदीर्घम्- एकीभावः)

### 93. रौ घम् ॥ 3॥

वृ- स्वरौ दीर्घमापद्येते। उभावेकं विकारः। सस्थानः इत्युक्तम्।

व्या-स्वरौ वर्णौ दीर्घमापद्येते। उभौ वर्णौ एकी भवतः। सः विकारः

3 2 3 1 2र 2 3 1 2 3
सस्थानः। अग्निम्-ईडिष्व-अवसे। ईडिष्वावसे(49)। एतदेव सवर्णदीर्घमित्याचक्षते वैयाकरणाः।

2 3 1 2 3 1 2र 3 1 2
उदा- न- त्वा- अद्रिवः। न त्वाद्रिवः (291), अथ- आदित्य। अथादित्य

3 2 3 2 3 1 1 2 3 1 2 1 2
व्रते (589), वयमुत्वा (408 भरन्तोऽवस्यवः), आ गमत् (290),

3 1 2 1 2र 3 2 3क 2र 2 3
अभिमातिषाहः (603), अध-हि-इन्द्र ।अधा हीन्द्र (406), वाजिनीवसू

3 1 2 3 2 3 3 1 2 3 2 3 2 3 1
(1745), सु-उक्तेभिः । सूक्तेभिः (59), आजिषु- ऊतिम्। आजिषूति

3 2र 3
(411), सु- ऊर्यस्य। सूर्यस्य (538 ) सन्ध्यापत्तिर्विशेषात् ।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - दो समानस्थानीय स्वर मिलकर दीर्घ हो जाते हैं।

विशेषः- तु.सू- समानाक्षरे सस्थाने दीर्घमेकमुभे स्वरम् (ऋ.प्रा,2.15) दीर्घं समानाक्षरे सवर्ण परे (तै.प्रा, 10.2)। सि सवर्णे दीर्घम् (वा.प्रा, 4.50)। अकः सवर्णे दीर्घः (पा.सू,6.1.101)। समानाक्षरस्य सवर्णे दीर्घः (च.अ, 3.42)।

(सन्ध्यक्षरभावः)

## 94. अस्थनामिनी सन्ध्यम् ॥ 4 ॥

वृ- अस्थनामिनी सन्ध्यमापद्येते।

व्या-अवर्णस्य अस्थ इति संज्ञा। अनेन अकार आकारौ गृह्येते। अवर्ण व्यतिरिक्तानां अचां नामि इति संज्ञा। तेन इवर्ण उवर्णौ नामिशब्देन गृह्येते। अस्थश्च नामि च अस्थनामिनी, ते सन्ध्यमापद्येते।

उदा- आ- इन्द्र। एन्द्र (129)। आ-पप्राथ-उषाः। आपप्राथोषाः (379)। तव-इत्। तवे दु (752), ए ऐ ओ औ इत्येतानि सन्ध्यक्षराणि।, अस्थनामिनी इति किम् ? पूर्वेण (1091)

सू.अ - नामिन् (इ, ई, उ, ऊ, ऋ, ॠ, ए, ओ, ऐ, औ) स्वर के साथ मिलकर अकार सन्ध्यक्षर भाव को प्राप्त हो जाता है।

विशेषः- तु.सू- इकारोदय एकारमकारः सोदयः । तथा उकारोदय ओकारम् (ऋ.प्रा,2.16.17)। कण्ठ्यादि वर्ण एकारम्। उवर्ण ओकारम् (वा.प्रा,4.52.53)। इवर्ण पर एकारम्। उवर्ण पर ओकारम् (तै.प्रा,10.4,5)। आद्गुणः (पा.सू, 6.1.87)। अवर्णस्येवर्ण एकारः। उवर्ण ओकारम् (च.अ,3.44,45)।

(ऐकार औकारभावः)

## 95. सन्ध्यं द्विवर्णम् ॥ 5 ॥

वृ- सन्ध्यक्षरं द्विवर्णमापद्यते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या- उपधा इत्यध्याहारः अस्थमित्यनुवर्तते। अस्थोपधं सन्ध्यं द्विवर्णं आपद्यते।

उदा- प्र-एतु। प्रैतु (56)। कृणुत-एकम्-इत्। कृणुतैकमिन्माम् (591), साम्नि क्षतत्वौऽ3हो3 (320), प्र-ऐरयत्। अपः प्रैरयत् सगर (339 अप प्रैरा), अमित-ओजाः। अमितौजाः (359)। ऐ औ एतौ द्विवर्णौ। उपधाशब्दः समीपवाची।

सू.अ - अकार सन्ध्यक्षर के साथ मिलकर द्विवर्ण अर्थात् ऐ, औ को प्राप्त हो जाता है।

विशेषः-तु.सू- परष्वैकारमोजयोः (ऋ.प्रा,2.18)। औकारं युग्मयोः (ऋ.प्रा,2.19)। एकारैकार पर ऐकारम् । ओकारौकारपर औकारम् (तै.प्रा,10.6,7)। सन्ध्यक्षर ऐकारौकारयोः (वा.प्रा,4.56)। वृद्धि रेचि (पा.सू,6.1.88)। एकारैकारयोरैकारः। ओकारौकरयोरौकारः (च.अ, 3.50,51)।

**96. भाषायां णीपरयोः ।।6।।**

वृ-भाषायां णीपरयोरक्षरयोर्द्विवर्णमापद्यते।

व्या- भाषायां णीपरयोः अक्षरयोः प्रत्यययोः अस्थं द्विवर्णं आपद्यते। स्व ईरिणी स्वैरिणी। अक्ष ऊहिणी अक्षौहिणी। अस्थनामिनीत्य-धिकारः। भाषायां णीपरयोः। यद्यपि भाषायामित्युक्तं तथापि न स्वैरी स्वैरिणी कुतः इति छान्दोग्ये। अस्थनामिनीत्यधिकारः (सू 94)।

विशेषः- स्वादीरेरिणोः (वा-3606) अक्षादूहिन्यामुपसंख्यानम् (वा-3604) इति वार्तिकम्। अत्र अकार ईकारयोरचोः पूर्वपरयोः वृद्धिः एकादेशश्च स्यात्। तथा आकार ऊकारयोः पूर्वपरयोरचोः वृद्धिः एकादेशश्चेति यथासंख्यमर्थः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - भाषा में अकार के बाद णी परक स्वर होने पर दोनों स्वर मिलकर द्विवर्ण (ऐ,औ) को प्राप्त हो जाते हैं।

तु.सू- वाहौचस्वरभृतेवा (वा.प्रा,4.57)। स्वादीरेरिष्योवृद्धिर्वक्तव्या। अक्षादूहिन्या वृद्धिर्वक्तव्या (पा.सू, 6.1.89 वार्तिकम्)।

## 97. उपसर्गात् ऊहेष्यौ प्रेष्यार्थे ॥ 7 ॥

वृ- उपसर्गात् परादूहेष्यौ प्रेष्यार्थे द्विवर्णमापद्येते।

व्या- उपसर्गात्परौ ऊह ईष्यशब्दौ द्विवर्णमापद्येते। प्रेष्यार्थश्चेत्।

उदा - प्र-ऊहः । प्रौहः। प्र- ईष्या । प्रैष्या। उप - ऊहः। उपौहः। उप -ईष्यः। उपैष्यः। प्रेष्यार्थ इति किम् ? प्रेष्यतु भवानध्वर्युश्च।
सू.अ - उपसर्ग के बाद प्रेष्यार्थक ऊह, ईष्य पद हो तो दोनों के स्वर मिलकर द्विवर्ण को प्राप्त हो जाते हैं।
विशेषः- तु.सू- प्राद्ढोढ्ये प्रेष्यष वृद्धिर्वक्तव्या (पा.सू,6.1.89 वार्तिकम्)।

## 98. सन्ध्ये परं सामर्थ्ये ॥ 8 ॥

वृ- सन्ध्ये प्रत्यये परवर्णमापद्यते सामर्थ्ये।
व्या- गुणसन्धिः वृद्धिसन्धिश्च उक्ता। इदानीं पररूपसन्धिः उच्यते। उपसर्गः इत्यनुवर्तते । उपसर्गः सन्ध्ये अक्षरे प्रत्यये पररूपं आपद्यते सामर्थ्ये चेत्।
उदा - प्र ओढीयति - प्रोढीयति। प्र ओजयति - प्रोजयति। प्र एषयति- प्रेषयति। प्र ओषितः - प्रोषितः। उपसर्ग इति किम् ? राजा ओढीयति राजौढीयति। सामर्थ्य इति किम् ? प्रौढीयति।
सू.अ - उपसर्ग के बाद सन्ध्यक्षर हो तो दोनों परभाव को प्राप्त हो जाते हैं।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विशेषः- एजत्येजोरेकेषाम् (वा.प्रा,4.55)। एङि पररूपम् (पा.सू,6.1.94) शकल्येष्यादिषु परनृपम् (च.अ, 3.52)।

## 99. समासे ॥ 9 ॥

वृ- समासे च परमापद्यते।

व्या- समासपदे च सन्ध्यक्षरे पूर्वं वर्तमानः अस्थः पररूपमाद्यते।

उदा- क ओमित्यवोचत् कोमित्यवोचत्। ब्रह्म ओमित्यवोचत ब्रह्मोमित्यवोचत्। सम ओहम् समोहम् । विषम ओहम् विषमोहम्। दुःख ओहम् दुःखोहम्। सम ओलः समोलः। विषम ओलः विषमोलः। दुख ओलः दुखोलः। सम ओष्ठी समोष्ठी। बिम्ब ओष्ठी बिम्बोष्ठी। सम ओकः समोकः। विषम ओकः विषमोकः। दुःख ओकः दुःखोकः। जल ओकः जलोकः। समासे इति किम्? तव ओष्ठः तवौष्ठः। अजौतुं भक्षयति। उपौष्ठबध्नी वडवा। नाम चेदपर्युदासः।

सू.अ - समास में सन्ध्यक्षर परभाव को प्राप्त हो जाता है।

विशेषः- तु.सू- ओमाङोश्च (पा.सू,6.1.95)। ओत्वोष्ठ्योः समासे वा (पा.सू,6.1.94 वार्तिकम्)।

(अपवादसूत्रम्)

## 100. न वा ॥ 10 ॥

वृ- न वा परमापद्यते। द्विवर्णमेव वा न वा॥

व्या- समास पदे पररूपं भवति। न वा भवति। वा शब्दः विकल्पार्थः। क्वचित् पररूपं क्वचिद् वृद्धिसन्धिः।

सू.अ - अथवा समास में सन्ध्यक्षर परभाव को प्राप्त नहीं होता या तो वह द्विवर्ण को प्राप्त होता है अथवा द्विवर्ण को भी प्राप्त नहीं होता।

इति चतुर्थो दशकः

0-----ॐ-----0

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ पञ्चमो दशकः

(असवर्ण ह्रस्वं एकीभावः)

### 101. ह्रस्वमृचि ॥ 1 ॥

वृ- ह्रस्वमापद्यते ऋचि प्रत्यये।

व्या- अस्थात् ऋचिप्रत्यये ह्रस्वं गुणादेशः स्यात्।

उदा- अष्ट-ऋचम् । अष्टर्चम् इत्यादि। मन्त्रे सह-ऋषभाः (3 2 3)। सहर्षभाः (3 1 2) (626)। एतदनुसारेण सूत्रे ऋचि इति स्थाने ऋति इति स्यात्। नव ऋचम्-नवर्चम्। दश ऋचम्-दशर्चम्। शाकल ऋचम्- शाकलर्चम्। माल-ऋचम्-मालर्चम्।

सू.अ - ह्रस्व अकार के बाद ऋच् शब्द हो तो दोनों अ ऋ मिलकर ह्रस्व हो जाते हैं।

विशेषः- तु.सू- ऋकार उदये कण्ठ्यावकारं तदुद्ग्राहवत् (ऋ.प्रा,2.32) कण्ठ्य ऋकारे ह्रस्वम् (वा.प्रा,4.48)। अरमृकारपरे (तै.प्रा,10.8)। आद्गुणः (पा.सू,6.1.87)। अरमृवर्णे (च.अ,3.46)।

(रेफभावः)

### 102.ऋमप्येके ॥ 2 ॥

वृ-ऋमप्येके आचार्या ह्रस्वं मन्यन्ते।

व्या- ऋकारे प्रत्यये प्रकृतिभावः इति एके आचार्याः मन्यन्ते।

उदा- सहऋषभाः । अष्ट ऋचम्।

सू.अ-कुछ आचार्यों का मत है कि ऋम् शब्द परे हो तो भी ह्रस्व अकार तथा ऋ दोनों मिलकर ह्रस्व हो जाते हैं।

(असवर्णदीर्घ एकीभावः)

### 103.मासे घं ऋति ॥ 3 ॥

वृ- समासे दीर्घमापद्यते ऋति प्रत्यये।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या- समासपदे ऋतिप्रत्यये दीर्घं भवति। अत्र वृद्धिसन्धिः।

उदा- मशकेन ऋतः - मशकार्तः। शीतेन ऋतः - शीतार्तः, भयेन ऋतः - भयार्तः, दण्डेन ऋतः - दण्डार्तः इत्यादि। समास इति किम् ? मशक इति मशकमामन्त्र्य ऋतं पश्य-मशक ऋतम्। मशकर्तम्।

सू.अ -समास में अकार के बाद ऋत पद हो तो दोनों मिलकर दीर्घ हो जाते हैं।

विशेषः- तु.सू- आरभृकारोऽपृक्तात् (वा.प्रा,4.58)। एत्येधत्यूठ्सु (पा.सू,6.1.89)। ऋते च तृतीयसमासे वर्णाद् वृद्धिर्वक्तव्या (पा.सू, 6.1.89 वार्तिकम्)। उरण् रपरः (पा.सू,1,1,51)।

## 104. मक्रियायाम् ॥ 4 ॥

वृ- म शब्दः क्रियायां दीर्घमापद्यते।

व्या- म शब्दः क्रियायां प्रत्ययभूतायां दीर्घं वृद्धं भवति।

उदा- म। ऋच्छति- मार्च्छति। म। ऋषभं-मार्षभम्। म। ऋभ्वन्तम् मार्भ्वन्तम्। म। ऋतीयमानम्- मार्तीयमानम्। म शब्द इति किम् ? राजा- ऋच्छति- राजर्च्छति। समर्चन्ति। क्रियायां किम् ? गौतम-ऋषिं- गौतमर्षिम्। मर्षभम्। कर्मणा चेद्दीर्घमेव।

सू.अ-म शब्द क्रिया पद के ऋ के साथ मिलकर दीर्घ हो जाता है।

## 105. उपसर्गः सामर्थ्ये ॥ 5 ॥

वृ- उपसर्गः सामर्थ्ये दीर्घमापद्यते।

व्यां-उपसर्गः क्रियायां प्रत्ययभूतायां सामर्थ्ये चेत्, दीर्घं वृद्धं भवति।

उदा-प्र-ऋच्छति- प्रार्च्छति, उप-ऋच्छति- उपार्च्छति। उपसर्ग इति किम् ? राजा- ऋच्छति - राजर्च्छति। सामर्थ्य इति किम् ? अर्चनात्।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - सामर्थ्य सूचक पद में उपसर्ग के बाद ऋच पद हो तो दोनों अ ऋ मिलकर दीर्घ हो जाते हैं।

विशेषः-तु.सू- उपसर्गपूर्व आरम् (तै.प्रा,10.9)। आरभृकारोऽपृक्तात् (वा.प्रा.4.58)। उपसर्गादृति धातौ (पा.सू,6.1.191)। उपसर्गः धात्वादावरभ् (च.अ,3.48)।

**106. वत्सतरादीनामृणि ॥ 6 ॥**

वृ- वत्सतरादीनामृणि प्रत्यये दीर्घमापद्यते।

व्या- वत्सतरकम्बलवसन इत्यादीनां ऋणिप्रत्यये वृद्धिर्भवति।

उदा- प्र-ऋणं । प्रार्णम्। वत्सतर- ऋणं । वत्सतरार्णम्। कम्बल-ऋणम्। कम्बलार्णम्, वसन- ऋणम्। वसनार्णम्, दश-ऋणम्। दशार्णम् इत्यादि । दशार्णो नाम देशः। प्रवत्सतरकम्बलवसन-दशार्णानामृणे (वा- 3608,9) इति वार्तिकम्।

सू.अ- वत्सतर आदि पदों के बाद ऋण पद हो तो दोनों अ ऋ मिलकर दीर्घ हो जाते हैं।

विशेषः- तु.सू- एत्येधत्यूठ्सु (पा.सू,9.1.89)। प्र वत्सतरकम्बल-वसनामृणे वृद्धिर्वक्तव्या। ऋणदशास्यां। वृद्धिर्वक्तव्या (पा.सू,6.1.89 वार्तिकम्)।

**107. रमृस्थमस्वे ॥ 7 ॥**

वृ- रेफमापद्यते ऋस्थमस्वे प्रत्यये।

व्या- ऋकारमक्षरम्, असवर्णे अचि परे रेफमापद्यते। अत्र यणसन्धिः उच्यते।

उदा- पितृ-अत्र । पित्रत्र, होतृ- अत्र। होत्रत्र, मातृ-अत्र। मात्रत्र, पित्रर्चनम् इत्यादि, अस्व इति किम् ? होतृ-सदनम्। होतृषदनम्। स्वरयोरित्यधिकारः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ- ऋकार के बाद ह्रस्व अ हो तो दोनों मिलकर रेफ हो जाते हैं।

विशेषः- तु.सू- इको यणचि (पा.सू,6.1.77)

(अपवादसूत्रम्)

## 108. ह्रस्वमेके ॥ 8 ॥

वृ- ह्रस्वं वैके आचार्या मन्यन्ते।

व्या-पदान्ता इकः असवर्णे अचिपरे प्रकृत्या स्युः। ह्रस्वो वा भवति इत्येके आचार्या मन्यन्ते।

उदा- चक्री - अत्र ।चक्र्यत्र । होतृ -अत्र प्रभृतीनि।

सू.अ -कुछ आचार्यों का मत है ऋकार के बाद ह्रस्व अकार हो तो ह्रस्व ही रह जाता है।

विशेषः- तु.सू- इको सवर्णे शाकल्यस्य ह्रस्वश्च (पा.सू,6.1.127)

(अन्तःस्थीभावः)

## 109. अन्तस्थाम् ॥ 9 ॥

वृ- अन्तस्थामापद्यते। अस्वे ह्रस्वमेक इत्यधिकारः।

व्या- इकार उकारौ असवर्णे अचिपरे अन्तस्थां यकार वकाररूपतां आपद्येते।

उदा- अबोधि अग्निः- अबोध्यग्निः (73)। अक्तुषु आ यमत् - अक्तुष्वायमत् (128)। परि ऊ इति सु -पर्यूषु (428)। असवर्ण इति किम् ? सवर्णे अस्थे दीर्घभावः। स्वरयोरित्यधिकारो व्यभिचार इति चेद्धिकारः। स्वस्थान इत्युक्तम्।

सू.अ - ह्रस्व अकार से पहले यदि असवर्ण ह्रस्व स्वर हो तो दोनों मिलकर अन्तस्था को प्राप्त हो जाते हैं।

विशेषः- तु.सू- समानाक्षरमन्तस्था स्वामकण्ठ्यं स्वरोदयम् (ऋ.प्रा, 2.21)। स्वरे भाव्यन्तःस्थाम् (वा.प्रा,4.46)। इको यणचि (पा.सू,6.1.77)। स्वरेनामिनोऽन्तःस्था (च.अ,3.39)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 110. तिः ॥ 10 ॥

वृ- गतिश्चान्तस्थामापद्यते।

व्या- गतिश्च अन्तस्थामापद्यते। इगतिः, उगतिः इति द्विविधा गतिः। अनयोः वृद्धौ आय् भावः, आव् भावश्च भवति। तत्र सन्धौ अन्तस्था भवति।

उदा- इना इ- इनीमा। इनायि (2 1) । इनीमासाऽ3इ (2) (176)। हाउ - आत्रा. हावात्रा (4 5) (147), हाउ-आज्ञा। हावाज्ञा (4 5) (564)। स्याग्नाइ (र 1) आदीनि (90)। तद् (1) विविद्वाइ (15) अत्र सन्धौ अन्तस्था भवन्ति। स्वरयोरित्यधिकारः।

सू.अ - गति अन्तस्था को प्राप्त हो जाती है।

विशेषः- इना इनीमासा3इ- इनाइ इनीमासा3इ- इनायि इनीमासा3इ - इनाइ इनीमासा3इ॥ हा आत्रा- हा उ आत्रा- हा व आत्रा- हावात्रा। हा आज्ञा- हा उ आज्ञा - हा व आज्ञा- हावाज्ञा॥

तु.सू- तयोर्य्वावचि संहितायाम् (पा.सू,8.2.108)। तयोः इदुतोः यकारवकारादेशौ भवतोऽचि...अग्नाइयाशा। पटाऽ3वाशा। अग्ना3यिन्द्रम्। पटा3वुदकम्। (पा.सू,8.2.108 काशिकावृत्तिः)

इति पञ्चमो दशकः

0-----ॐ-----0

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ षष्ठो दशकः

(अयादिभावः)

### 111. सन्ध्यमयवायावम् ॥ 1 ॥

वृ-सन्ध्यक्षरमयमवमायमावमापद्यते।

व्या-सन्ध्यमक्षरं अय्, अव्, आय्, आव्, भावमापद्यते असवर्णे अचि परे। ए ,ओ,ऐ,औ एतानि सन्ध्यक्षराणि। अय्, अव्, आय्, आव् एतेषां समाहारः अयवायावम्।

उदा- अग्ने- आ- याहि । अग्नयायाहि (1 ) अत्र एकारस्य अय् भावः, अनन्तरं यकारलोपः तदनन्तरं अग्न आ याहि इति सिद्ध्यति। इदं एकारस्य । शविष्ठघृष्णो आगहि। शविष्ठ धृष्णवा गहि (347), इदं ओकारस्य। सनतै- अभ्यवर्तयत्। सनतायभ्यवर्तयत् यकारलोपः सन ता अभ्यवर्तयत् इदं ऐकारस्य (आरण्यकम्-78 साम)। यौ - आहुः । या वाहुः (361) औकारस्य। अग्ने- इत्था। अग्नयित्थे (7), तस्मा उ अद्य (272), मातरावन्वेति (64) इत्यादि।

सू.अ - ए, ओ, ऐ तथा औ के बाद असवर्ण स्वर हो तो ये क्रमशः अय्, अव्, आय् और आव् हो जाते हैं।

विशेषः- तु.सू- उत्तमौ च द्वौ स्वरौ (ऋ.प्रा .2.25)। पूर्वौ चोपोत्त-मात्स्वरौ । ओष्ठ्ययोन्योर्भुग्नमनोष्ठ्ये वकारोऽत्रान्तरागमः (ऋ.प्रा, 2.28.31)। एकारोऽयम्। ओकारोऽवम्। ऐकार आयम् । औकार आवम् (तै.प्रा.9.11,12,14,15)। सन्ध्यक्षरमयवायावाम्(वा.प्रा, 5.46) । एचोऽयवायावः (पा.सू,6.178)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(नकारस्य विसर्जनीयभावः)

## 112. घान्नोऽडि विसर्जनीयं यवोहिषु ॥ 2 ॥

वृ-दीर्घात्परो नकारः पादमर्धीये प्रत्यये विसर्जनीयमापद्यते यवोहिषु प्रत्ययेषु।

व्या- अट् इति पादमध्यस्य संज्ञा। पादमध्ये वर्तमानः, घात् दीर्घात्परश्च वर्तमानः यः नकारः सः स्वरे प्रत्यये, यवोहिषु प्रत्ययेषु च विसर्जनीयमापद्यते।

उदा- अग्ने-मृड-महान्-असि (23)। अत्र नकारस्य विसर्जनीयत्वं महाः असि, अनन्तरं विसर्जनीय लोपः अनुस्वारागमश्च महाँ असि। गोमान्-यत् -इन्द्र । गोमाँ यदिन्द्र (277)। दाशिवान्- वोचे। दाशिवाँ वोचे (97)। महान्-हि-सः । महाँ हि षः (381)। विसर्जनीयलोपः अनुस्वारागम 117, 189, 185 सूत्रैः उपदिश्यते । यश्च वो च हिश्च यवोहयः तेषु यवोहिषु। दीर्घादिति किम्? क्रीडन्-ऊर्मिः। क्रीडन्नूर्मिः। अडि इति किम् ? अप्सु वाहोमयोभून् य एषां योभून्य एषां। स्वरे यवोहिषु इति किम् ? नि-युत्वान्-वायो । नियुत्वान्वा यवागहि (600)। ऋतूँरनु (229), परिधीँ रति (516), सिन्धूँरवासृजः (1802), इन्द्र इव दस्यूँर्नृ (द्राह्या. सू 21.1), उत् पर्णीँर्हतम् (ऋ.वे 1.184.2), बण्महाँ असि सूर्य (276), मृड महाँ अस्ययः (23), वस्याँ इन्द्रासि (292), महाँ हिषः (381), गोमाँ यदिन्द्र ते (277), दधन्वाँ यः (512), अग्निमीडायाम् (605, होताँर रत्न), इन्द्रस्य च सञ्जये (419 इषँ स्तो), दीर्घात्पर इति किम् ? क्रीडादीनि (584 क्रीडन्नूर्), नकारः? त्वामग्ने

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(9) विश्वेषां हि (2) अंशुमतीमति (323), पादमर्धीये इति ? अव यद्वान वान् हन् (315), दुर्हृणायून् (341), एतेष्विति ? अह्नः केतून्त्समीर्त्सति (608), भद्रान् कृण्वन् (533), देवान् विश्वान् (ऋ.वे 3.59.8) नियुत्वान् वायो(ऋ.वे. 2.41.2),परिधीँरति(516), आकाहा। लाशाम्। मा 571) सन्ध्यगीतम्।

सू.अ- पाद के मध्य में दीर्घ स्वर से परे नकार का प्रत्यय में य, व, ओ, इ, ह, व हो तो विसर्जनीय हो जाता हैं।

विशेषः- अत्र नकारस्य विसर्जनीयं जातम्। तदनन्तरं अनेन सूत्रेण विसर्जनीय प्राप्ताप्यनन्तरं 'रं विसर्जनीयो घोषे' सूत्रेण विसर्जनीयस्य रेफः 'अस्थात् यम्' सूत्रेण विसर्जनीयं यकारः 'यः' सूत्रेण यकारलोपः एवं 'व्यवधानोन्त्यविकारे' एवं 'आ रक्तः' सूत्रद्वयेन अनुस्वार जाते उपरोक्त रूपं निष्पद्यते।

तुलनात्मकं सूत्रम्- हतं योनौ वचोभिर्यान्युवन्यूँर्वनिषीष्टेति । ईकारोकारोपहितोरेफमेषु। स्वरेषु च । दस्यूं रेकोनूँरभि च (ऋ.प्रा, 4.69,70,71)। नकारस्य लोपरेफोष्मभावे पूर्वस्तत्स्थानादनुनासिकः स्वरः (ऋ.प्रा,4.80)। अनितिपरो ग्रहोख्ययाज्यापृष्ठ्यहिरण्यवर्णी-येष्वीकारोकारपूर्वो रेफमाकारपूर्वश्च य कारम् । लुप्येते त्ववर्णपूर्वौ यवकारौ (तै.प्रा,9.20 एवं 10.19)। नृन् पकारे विसर्जनीयम्। शत्रून् परिधीन् क्रतून् । वनस्पतीन् स्वरे रेफम् (वा.प्रा,3.141,142)। आकारोपधस्योपवद्धवादीनां स्वरे। नाम्युपधस्य रेफ ऋतूंरत्सृज्यते । वशीत्येवमादीनाम् (च.अ,2.27,29)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 113. घाद्ग्रा ॥ 3 ॥

वृ-दीर्घात्परस्य द्वेधं ग्राम एव विसर्जनीयमापद्यते।

व्या-दीर्घात्परस्य नकारस्य विसर्जनीयापत्तिः। सा कुत्र सम्भवति? ग्रा- ग्रामेगेये एव सम्भवति।

उदा- देवाँ उषः(40)। ग्रामेगेय इति किम्? तावान् अस्य। तावानस्य महिमा (620)। सत्रस्य (आ.गा. 170. अविदामदेवान्। समु। घर्मरोचने (आ.गा 279 लोकानरोचयः)।

सू.अ- ग्रामगेयगान में ही दीर्घ स्वर से परे संयुक्त नकार विसर्जनीय होता है।

## 114. आरक्तः ॥ 4 ॥

वृ- आकारो रक्तो भवति। बण्महादीनि (276)

व्या- आकारः आगतेन अनुस्वारेण सह अनुरक्तो भवति।
उदा- महाँ असि(276)। अत्र आकारः सानुनासिक इत्यर्थः।

सू.अ - आकार आगत अकार से अनुनासिक हो जाता है।

(विसर्जनीयस्य रेफभावः)

## 115. रं विसर्जनीयो घोषे ॥ 5 ॥

वृ- रेफमापद्यते विसर्जनीयो घोषे प्रत्यये। स्वरे चेत्यधिकारः।
व्या-विसर्जनीयः घोषे प्रत्यये रेफमापद्यते, स्वरे प्रत्यये च। स्वरे इति अनुवर्तते।

उदा- पदपाठे देवेभिः मानुषे। संहितापाठे देवेभिर्मानुषे जने (2)। वायोः- अनीके। वायोरनीके (13)। घोषे इति किम्? दिवः ककुत्

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



3 1 2र 1 2 3 1
(27) वृत्रहा नृभिः (411), ध्रा इ गुः (273) गो भादीनि (?) गोभिर्भङ्गम्

2र 3 3 2 3 2 3 2 3 1 3
(487), निर्ऋतीनाम् (396), ऊर्मिः-अपाम्। ऊर्मिरपाम् (584), मनु

2र 3 2 3क2र 3 2 3 2 3
ष्येभिः- अग्निः । मनुष्येभिरग्निः (79), अरण्योर्नि (79) घोषे इति ?

2र 3 2
पतिः पृथिव्यादीनि (27)।

सू.अ -घोष वर्ण बाद में हो तो विसर्रजनीय ही रेफ हो जाता है।

### 116. रप्रकृतिः ॥ 6 ॥

वृ- रप्रकृतिर्विसर्जनीयो रेफमापद्यते।

1 2 3 2
व्या - अग्ने त्रातः ऋतः। अग्ने त्रातर्ऋतः (42)। जरितः - विश्पतिः ।

1 2 3 1 2
जरितर्विश्पतिः (39) । अत्र त्रातृ जरितृ इति ऋकारान्तशब्दौ संबुद्धौ ऋस्थाने विसर्गान्तौ भवतः ऋ प्रकृतिकः इति।

3 23 1 3 1 2 3 1 2 3 2 1
उदा- प्रातरग्निः (85), प्रातर्जुषस्व (210), चन्द्रमा अप्स्वाऽ३न्तरा

2 3 2 3 1 2 2 3 1 1 2 3 2
(417), य उस्रिया (585), त्वावतः (193), परीतः (512), अदर्दरुत्

3 1 2 1 2 3 1
(315), अद्य नो देवसवितः (141), महि त्रीणाम् (192), प्रणेतः (193),

3 1 2 2 3 1 2 3 1 2 3 1 3 1
कदा वसो (228), य ऋते चिदभि (244), ब्रह्म जज्ञानम् (321), कृपा

2 2 3 1 2
स्वः (464), स्वः शब्दो रहस्ये (स्व 83 र् स्तोभः आ. गाने), प्रातर्यावभिः

1 2
(50), अहरहः (396), उन्नयने (आ. गा 3.10), समासत्वादुशब्दकृतौ

3 2 3 2 3 2 3
(अर्हाउ)। निवृत्तानि। देवानाम् (138 अवः), अग्ने त्वं नः (448 भुवः),

1 2 3 2 2 3 1 2र 1 2र 3 1 2
त्वं नश्चित्र (41), तवत्यं नर्यम् (466 भुवः), यत्सोमे सोम आभुवः

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



3 1 2
(188), विसर्जनीयमिति वा । सर्वासिद्धिरघोषे । अन्तश्चरति (631,
3
1377), ऊधः (331), ऊष्मणोवा निष्ठिन्यपदान्त इत्यधिकारः।
जरितरादीनि॥

सू.अ - रकार जन्य विसर्जनीय ही रेफ होता है।

विशेषः - अत्र उदाहरणे पूर्ववर्ति पदे तः इत्यस्य विसर्जनीयस्य मूलतः रः आसीत्, अतः अनेन सूत्रेण तः स्थित विसर्जनीयस्य रेफत्वं प्राप्तम्।
तुलनात्मकं सूत्रम्- ऋ.प्रा,1.76-103,तै.प्रा,8.8.15,वा.प्रा,1.160-168

## 117. अस्थाद्यम् ॥ 7 ॥

वृ- अस्थात्परो विसर्जनीयो यकारमापद्यते घोषे प्रत्यये।

12र 123
उदा - इतराः- गिरः (7) इतराय् इति । 158 सूत्रेण यकारलोपः इतरा
1 2 3 1 2 1 2र 3 2 3 1 2 3
गिरः। अस्थादिति किम् ? देवेभिः- मानुषे । देवेभिर्मानुषे (2) । घोषे
2 1 2 3 1 2र
इति किम् ? समिद्धः- शुक्रः। समिद्धश्शुक्रः आहुतः (4)। बण्
3 2 3 1 2 3 2 3 1 2 3 1 2
महादीनि (276), देवा यज्ञम् (56), विश्वा हि मा (75), पृतना अभिभूत
3 3 2 3
रम् (370), उत द्विषादीनि (6), घोषे (सू.115) ? रथः क्षयः । सम्मील्यो
3 2
वात्रघ्ने (494), देवव्रते ।अनूषत क्षाः (606)।

सू.अ -आकार के बाद अवस्थित विसर्जनीय यकार हो जाता है।

विशेषः- देवाः यज्ञम् इत्यत्र अनेन सूत्रेण विसर्जनीयस्य यकार प्राप्तिः तदनन्तरं यः इति सूत्रेण यकारस्य लोपे देवा यज्ञम् इत्यादि रूपं निष्पन्नम्। विश्वाः हि। विश्वाहि। पृतनाः अभिभूतरम्। पृतना अभिभूतरम् ।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तुलनात्मकं सूत्रम्- अथ स्वरपरो यकारम् (तै.प्रा,9.10)। कण्ठ्यपूर्वी यकारमपरिमितः (वा.प्रा,4.36)। स्वरे यकारम् (च.अ,2.41)।

## 118. ओम् अः ॥ 8॥

वृ- ओम् आपद्यते। उक्तेभिर्मन्दिष्ठप्रभृतीनि।।

व्या- अःकारः घोषे प्रत्यये क्वचित् ओकारमापद्यते।

उदा - तरोभिः-वः-विदद्वसुम् । तरोभिर्वो विदद्वसुम् (237)। महतः-विरप्शिन् ।महतो विरप्शिन् (625)घोष इति, किम् ? समिद्धः शुक्रः (4)

सू.अ - मन्दिष्ठः आदि पदों का विसर्जनीय के बाद ह्रस्व अकार हो तो विसर्जनीय ओ हो जाता है।

विशेषः- तुलनात्मकं सूत्रम्- उद्ग्राहाणां पूर्वरूपाण्यकारे ... प्रकृत्या द्वे ओ भवत्येकमाद्यम् (ऋ.प्रा,2.33)। घोषवत्परश्च (तै.प्रा,9.8)। सर्वो अःकारः ओकारम् (वा.प्रा,4.4.1)। घोषवति च (च.अ,2.54)। दृशि च (पा.सू,6.1.114)।

## 119. रे ॥ 9॥

वृ-स्वरे द्वैधमकार ओ भवति।

व्या-स्वरे ह्रस्व अकाररूपे प्रत्यये अःकारः ओकारमापद्यते।

उदा- प्रेष्ठं-वः-अतिथिं। प्रेष्ठं वो अतिथिम्(5)। कः-अद्य। को अद्य युङ्क्ते (341)। पुरः- अग्निम्- पुरो अग्निम् (461)। अकारे स्वरे इति किम् ? चित्रः इत्। चित्र इच्छिशोः(64)। सः-इन्द्र। स इन्द्र स्तोमवाहसः (302)

सू.अ -संयुक्त अकार के परवर्ती विसर्जनीय के बाद ह्रस्व अकार हो तो विसर्जनीय ओ हो जाता हैं।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विशेषः- तुलनात्मकं सूत्रम् - ओकारोऽसँहितोऽकारव्यञ्जनपरः (तै.प्रा, 4.6)। अकारे च (वा.प्रा,4.42)। अतो रोरप्लुदादप्लुते (पा.सू, 6.1.113)

## 120. नौ ॥ 10 ॥

वृ-नौ शब्दश्चाकार ओ भवति।

व्या- नौ शब्दश्च ह्रस्व अकारे प्रत्यये ओ भवति।

उदा- सानौ - अव्ये - वृषा पवित्रे अधि सानो अव्ये (529)। अकार इति किम्? अश्विनौ ऋषिः स्तोतावामश्विनावृषिः। अश्विना बृहत् (1728)

सू.अ - नौ शब्द का आकार ओ हो जाता है, यदि उसके बाद ह्रस्व अकार हो।

इति षष्ठो दशकः

0-----ॐ-----0

अथ सप्तमो दशकः

## 121. तो षि ॥ 1 ॥

वृ- इदं च रूपग्रहणम्।

व्या- इतः सिञ्चत इत्यत्र सकारप्राप्तस्य विसर्जनीयस्य ग्रहणादोकार-प्राप्तिः। परि इतः सिञ्चत- परीतोषिञ्चत (512)।

सू.अ - तः का विसर्जनीय ओकार हो जाता है। मूर्धन्य षि परे रहते हैं।

## 122. होरास्वोरु ॥ 2 ॥

वृ- इदमपि रूपग्रहणम्।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या- अहः - रात्राणि। अहोरात्राणि। स्वः - रुहाणाः। स्वोरुहाणाः। रेफप्राप्तस्य ग्रहणादोकारापत्तिः। अहोरात्राणि। उन्नयामि इत्यत्र।

सू.अ- अहो रात्रिः, स्वोरुहाणाः का विसर्जनीय ओकार हो गया है।

विशेषः- अत्र विसर्जनीयस्य विकल्पेन यकार तथा रेफः प्राप्यते। यकारस्य य इत्यनेन सूत्रेण लोपे, विसर्गविहीनः रेफ विसर्जनीयस्य रेफ प्राप्ते र कारयुक्तः भवति।

तुलनात्मकं सूत्रम्- रोऽसुपि (पा.सू,8.2.96)। रुपरात्रिस्थन्तरेषु रुत्वं वाच्यम् (पा.सू,8.2.96 वार्तिकः)।

## 123. राजने ॥ 3 ॥

**वृ**- स्वः शब्द ओ भवति।

व्या- राजने साम्नि स्वः शब्दः ओ भवति। ग्रहणात्।

 1र र  र  र  र  र 2  3   111
**उदा** - वागीडासूवो बृहद्भाः 2345। आरण्यकं 205, रहस्यं 66 साम।।

सू.अ - स्वः का विसर्जनीय ओ हो जाता है, यदि राजन् साम हो तो।

(विसर्जनीय अथवा रेफभावः)

## 124. उभयथा भुवो म्नः ऊधरवः ॥ 4 ॥

वृ- उभयथा न्यायो विसर्जनीय रेफो वा।

व्या- भुवः अम्नः ऊधः अवः एते उभयथा उभयप्रकारेण, विसर्जनीयरुपेण वा रेफरुपेण वा वर्तन्ते।

उदा- भुवः-इति। भुवरिति। अम्नः - इति । अम्नरिति। ऊधः इति-ऊधरिति। अवः - इति। अवरिति। दक्षिणाग्निम्। व्याहृतिवर्गे च (स्तोभः)। ऊधरिति अतिषितं-यत् - ऊधः पयः- अतिषितं यदूधः पयः। अत्र विसर्जनीयः । चक्रं यदस्य इत्यत्र। अवरिति अवः- अस्तु। महित्रीणामवरस्तु, अत्र रेफः। अम्न एवावरुन्धे। अम्नरित्येव निरुप्यम् । ऊधः - वा अन्तरिक्षम्। ऊधर्वा अन्तरिक्ष (ता.म.ब्रा

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



24.16), ऊधर्वा अनु प्रजाः प्रजायन्ते। छन्दस्यूधरवश्च भवति। चक्रं यद् (331), महि त्री (192), ब्रह्म जज्ञानम् (321) च।

सू.अ- भुवः, अम्नः, ऊधः, तथा अवः का विसर्जनीय अथवा रेफ हो जाता है।

विशेषः- तुलनात्मकं सूत्रम्- अवर्महः। अनर्धर्चान्तेस्वरघोषवत्परमूधः (ऋ.प्रा,1.96,97)। ऊधोऽम्नोभुवसाम् (च.अ,2.52)। अम्नरूधरवरि-त्युभयथा छन्दसि। भुवश्च महाव्याहृतेः (पा.सू,8.2.70,71)।

(विसर्जनीयस्य सकारभावः)

## 125. सप्रकृतिर्मासे सं कृकमोः ॥ 5 ॥

वृ-समासे सकारमापद्यते कृकमोः प्रत्यययोः करोतौ कामयतौ च।

व्या-सप्रकृतिः विसर्जनीयः समासे सकारमापद्यते। कृकमोः प्रत्यययोः करोतौ कामयतौ च।

उदा-यशः-कारः। यशस्कारः। श्रेयः-कारः। श्रेयस्कारः। तेजः-कारः। तेजस्कारः। कामे चैवं सप्रकृतिः। यशः-कामः । यशस्कामः, श्रेयस्कामः। समासे इति किम् ? वर्चः कामयते वर्चः कामयते, यशः कारयते । कृकमोः इति किम् ? दिशः -प्रदिशः कल्पन्तां (स्तोभ 1.8)

1 3 500

दिशःप्रदिशः क । पाऽ2-ताऽ234औहोवा (आ.गा.64)। अयः पालाः।

सू.अ- समास में कृ तथा कम् धातु से निष्पन्न कार और काम शब्द परे हो तो विसर्जनीय सकार हो जाता है।

विशेषः- तुलनात्मकं सूत्रम्-..नीललोहितश्रेयस्करः (वा.प्रा,2.20)। कखपकारपरः षमकारपूर्वः समवग्रहः (तै.प्रा,8.23)। अतः कृकमिक-सकुम्भपात्रकुशाकर्णीष्वनव्ययस्य (पा.सू, 8.3.46)।

## 126. यश्चातिशये ॥ 6 ॥

वृ- यः शब्दः अतिशये सकारमापद्यते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या-यः शब्दः अतिशयार्थे सकारमापद्यते कृकमोः प्रत्यययोः।

उदा- अयः कारायते- अयस्कारायते । अयः कामयते- अयस्कामयते। पापीयः कारायते- पापीयस्कारायते। वर्षीयस्कारायते। कामं चैवं यः शब्दः। अतिशये इति किम् ? अयः कामः - अयःकामः।।

सू.अ - अतिशयार्थक पद में कार शब्द परे हो तो यः का विसर्जनीय सकार हो जाता है।

**127. अङ्गे च कम्व्यादौ ॥ 7 ॥**

वृ- अङ्गे च प्रत्यये सकारमापद्यते ककार मकार वकार यकारादावङ्गे।

व्या- ककार मकार वकार यकारादौ अङ्गे प्रत्यये च विसर्जनीयः सकारमापद्यते।

उदा- अयः कम्- अयस्कम्। पयस्कम्, यशस्कम्, तेजस्कम्। आयुष्मत्, सर्पिष्मत्, ज्योतिष्मत्। ऊर्जस्वती, पयस्वती, रजस्वला। चतुरस्या , शिरस्या, पयस्या, यशस्या च । उरसा पयसा शिरसा यशसा।

सू.अ - अङ्ग के आदि में ककार, मकार, वकार, यकार हो तो उनके परे रहते विसर्जनीय सकार हो जाता है।

विशेषः- उदा- (1)अयः कम्- अयस्कम्। (2) पयः कम्- पयस्कम्। (3) यशः कम् - यशस्कम् । (4)तेजः कम् - तेजस्कम्। (5) आयुः मत्- आयुष्मत् । (6) सर्पिः मत् - सर्पिष्मत् । (7) ज्योतिः मत् - ज्योतिष्मत् । (8) ऊर्जः वती- ऊर्जष्वती । (9) पयः वती - पयस्वती । (10) रजः वला - रजस्वला । (11) चतुरः या - चतुरस्या । (12) शिरः या - शिरस्या । (13) पयः या - पयस्या । (14) यशः या - यशस्या ।

**128. कौतस्कुतादीनाम् ॥ 8 ॥**

वृ- कौतस्कुतादीनां च सकारमापद्यते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या- कौतस्कुतादिगणपठितानां विसर्जनीयः सकारमापद्यते।

उदा- कस्कः, कौतस्कुतः, पुत्रादिन्यास्पुत्रः, शिरस्पदम्, अधस्पदम्, अयस्कामः, अयस्पात्रम्, पयस्कामः, तमींकृधि, अयस्पिण्डोराज्ञो देशः इत्यत्र। कौतस्कुतादीनामिति किम् ? पितुः पुत्रः - पितुः पुत्रः। पुत्रः शुनः- शुनस्पुत्रः। शुनस्पतिः। शुनस्कर्ण ऋषिः।

सू.अ - कौतस्कुतादि गणमें पठित पदों का विसर्जनीय सकार हो जाता है।

विशेषः- उदा- कौतः कुतः- कौतस्कुतः। कः कः - कस्कः। शिरः पदम्- शिरस्पदम्। अधः पदम्- अधस्पदम्। अयः पात्रम्- अयस्पात्रम्। पयः कामः- पयस्कामः। अयः पिण्डः - अयस्पिण्डः। पुत्रादिन्याः पुत्रः - पुत्रादिन्यास्पुत्रः।

तुलनात्मकं सूत्रम्- अधः शिरसी पदे । कस्कादिषु च। छन्दसि वा आम्रेडितयोः। षष्ठ्याः पतिपुत्रपृष्टपारपदपयस्पोषेषु (पा.सू, 8.3.47, 48, 49,53)।

## 129. पर्वणि सद्यस्काला ॥ 9॥

वृ- पर्वणि सकारमापद्यते।

व्या-सद्यस्काला इत्यत्र पर्वार्थे सकारापत्तिः।

उदा- सद्यस्काला पौर्णमासी, सद्यस्काला अमावास्या। सद्यः कालमन्यत्।

सू.अ- पर्व के अर्थ का वाचक पद में सद्यः काला, का विसर्जनीय सकार हो जाता है।

## 130. नामिनोऽघोषे सामर्थ्ये ॥ 10॥

वृ-नामिनः परो विसर्जनीयोऽघोषे प्रत्यये सकारमापद्यते सामर्थ्ये।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या- अवर्णव्यतिरिक्तानामचां नामीति संज्ञा। नामिनः परो विसर्जनीयः अघोषे प्रत्यये सामर्थ्यार्थे सकारमापद्यते। यजुर्ज्योतिर्हविः सर्पिर्बर्हिर्धनुर्वपुरिति पूर्वपदान्येकं प्रमाणं वक्ष्यामः।

उदा- यजुः कुण्डम्-यजुष्कुण्डम्। ज्योतिः कुण्डम्- ज्योतिष्कुण्डम्। शोचिः केशं- शोचिष्केशम् (640) विचक्षण । नामिनः पर इति किम्? यशः-पात्रम्। अघोष इति किम्? ज्योतिः गायति- ज्योतिर्गायति। सप्रकृतिः इति किम्? अग्निः कुण्डे। समासे इति किम् ? ज्योतिः कुले। सामर्थ्य इति किम् ? आहर त्वं धनुः पाणे।।

सू.अ-सामर्थ्यसूचक पद में विसर्जनीय सकार हो जाता है, यदि उसके पहले नामिन् अक्षर हो तथा उसके बाद अघोष वर्ण हों।

विशेषः- यजुः कुण्डम् इत्यत्र विसर्जनीयस्य पूर्वं उ अथवा उ नामिन् वर्णः अस्ति, परे च अघोषवर्णः विद्यते। अतः विसर्जनीयस्य सकारं प्राप्तम्। तदनन्तरं सन्ध्यः इत्यनेन सूत्रेण मूर्धन्यादेशे यजुष्कुण्डम् इति रूपं निष्पन्नम्।

इति सप्तमो दशकः

0-----ॐ-----0

अथ अष्टमो दशकः

## 131. मिथुनाख्ये वा ॥ 1 ॥

वृ- मिथुनाख्ये वा भवति परोष्मापत्तिः। प्रकृतिभावसितिभावाः। पूर्वयोगे सिशब्दे अपि हितानि त्रीण्यायान्ति।

व्या- द्वन्द्वार्थप्रयुक्ते अभ्यासयुक्तेत्यर्थः विसर्जनीयः सकारमापद्यते विकल्पेन । गर्भे[1 2] मातुः[3 2] पितुः[3 2] पिता[3 1] - पितुष्पिता (1397) पुनः पुनः अत्र न अतः विकल्पः॥

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ- मिथुन वाचक पद में विसर्जनीय ऊष्मन् षकार, सकार अथवा प्रकृतिभाव को प्राप्त होता है।

**132. विग्रहे च ॥ 2॥**

वृ- विग्रहे वा भवति परोष्मापत्तिः। ज्योतिष्कुण्डप्रभृतीनि।

व्या - विग्रहयोग्ये समासपदे इत्यर्थः क्वचित्सकारापत्तिः विसर्जनीयस्य । ज्योतिष्कृदसिसूर्य (635), ज्योतिः कुले अत्र न।

सू.अ - विग्रह में विसर्जनीय ऊष्मन् षकार, सकार अथवा प्रकृतिभाव को प्राप्त होता है।

विशेषः-तुलनात्मकं सूत्रम्- इसुसोः सामर्थ्ये (पा.सू,8.3.44)।

**133. निः ॥ 3॥**

वृ-निः इत्यत्र विसर्जनीयः सकारमापद्यते ततः षत्वम्। तदा - निः कृतम् - निष्कृतम् (510), निः स्वादितम्- निष्ष्वादितम्, निः पीतम्-निष्पीतम्।

सू.अ-निः का विसर्जनीय भी सकार अथवा प्रकृतिभाव को प्राप्त हो जाता है।

विशेषः-अत्र उदाहरणे निः शब्दात् परं अघोषवर्णत्वात् विसर्जनीयस्य सकारमापद्यते, एवं सकारस्य सन्ध्यः इति सूत्रेण मूर्धन्यादेशे षत्वं प्राप्तम्।

तु.सू- आविर्निरिडः शश्वतोऽपसोदेवरिषोंऽहसोऽतिदिवो विश्वतोऽश्मनस्तमसः (तै.प्रा,8.24)। ककारपकारयोः सकारम् । भाव्युपधः षकारम् (वा.प्रा,3.21,22)। निर्दुराविर्हविरसमासे (च.अ, 2.63)। इदुदुपधस्य चाप्रत्ययस्य (पा.सू, 8.3.41)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 134. दुः ॥ 4 ॥

वृ- अत्र विसर्जनीयः सकारमापद्यते। दुः कृतम्-दुष्कृतम् पूर्ववत् षत्वम्। दुः- पीतम्। दुष्पीतम्।

सू.अ - दुः का विसर्जनीय सकार हो जाता है।

विशेषः- अत्र अघोषवर्णपरत्वात् दुः इत्यस्य विसर्जनीयस्य सकारः तथा पूर्वोक्तसूत्रेण मूर्धन्यादेशे षकारः।

तुलनात्मकं सूत्रम्- निर्दुराविहविरसमासेऽपि (च.अ,2.63)।

(अपवादसूत्रम्)

## 135. असुखे खे ॥ 5 ॥

वृ- असुखे च खे प्रत्यये न सकारमापद्यते।

व्या- असुखार्थे पदे खे प्रत्यये न सकारमापद्यते।

उदा - दुःखापिपासा । दुःखा बुभुक्षा, दुःखो रथः, कस्मादसुखे ? दुष्खमिदं शकटम्, पापकमस्य खम्।

सू.अ- असुख के सूचक पद में दुः के परे ख होने पर विसर्जनीय सकार को नहीं प्राप्त होता।

## 136. ख्यातौ च ॥ 6 ॥

वृ-ख्यातौ च पापिकायां न सकारमापद्यते।

व्या-पापिकख्यातौ विषये खे प्रत्यये विसर्जनीयः न सकारमापद्यते। दुःखातिश्चायं वैधतेयः पापिकस्य ख्यातिः।

सू.अ- कुख्याति सूचक पद में दुः के बाद ख्याति पद हो तो विसर्जनीय सकार को नहीं प्राप्त करता।

## 137. द्विः ॥ 7 ॥

वृ-द्विः इत्यस्य विसर्जनीयस्य सकारापत्तिः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदा- द्विः कृतम्-द्विष्कृतम्। द्विः खातम्- द्विष्खातम्, द्विः पीतम्-द्विष्पीतम्, द्विः पाटितम्-द्विष्पाटितम्।

सू.अ- द्विः का विसर्जनीय सकार हो जाता है।

विशेषः- अत्र उदाहरणे अघोषवर्ण परत्वात् द्विः विद्यमानः विसर्जनीयः सकारं प्राप्त्वा पूर्वोक्त नियमेन मूर्धन्यं प्राप्नोति।
तुलनात्मकं सूत्रम्- द्विस्त्रिश्चतुरिति कृत्वोऽर्थे (पा.सू,8.3.43)।

**138. त्रिः ॥ 8 ॥**

वृ- त्रिः कृतम्- त्रिष्कृतम्, त्रिः खातम्-त्रिष्खातम्, त्रिः पीतम्-त्रिष्पीतम्, त्रिः पाटितम्- त्रिष्पाटितम्।

सू.अ - त्रिः का विसर्जनीय सकार हो जाता है।
विशेषः- अत्र ख,क,प परे स्थिते विसर्जनीयः सकार भूत्वा पूर्वोक्त सूत्रेण मूर्धन्यं प्राप्नोति।

**139. चतुः ॥ 9 ॥**

वृ- चतुः कृतम्-चतुष्कृतम्, चतुः खातम्- चतुष्खातम्, चतुः पीतम्-चतुष्पीतम्, चतुः पाटितम्-चतुष्पाटितम्।
सू.अ - चतुः का विसर्जनीय सकार हो जाता है।

विशेषः- अघोषवर्णपरत्वात् चतुः विसर्जनीयस्य सकारः भवति।
तुलनात्मकं सूत्रम्- पा.सू-8.3.43

**140. बहिः ॥ 10 ॥**

वृ-बहिः कृतम्-बहिष्कृतम्, बहिः खातम्-बहिष्खातम्, बहिः पीतम्-बहिष्पीतम्, बहिः पाटितम्- बहिष्पाटितम्।

सू.अ - बहिः का विसर्जनीय सकार हो जाता है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विशेषः- बहिः इत्यस्य विसर्जनीय अघोषवर्ण परत्वात् सकारं प्राप्नोति। तु. सू- इदुदुपधस्य चाप्रत्ययस्य (पा.सू,8.3. 41)।

इति अष्टमो दशकः

तृतीयः प्रपाठकः समाप्तः

**0-----ॐ-----0**



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ चतुर्थः प्रपाठकः

### 141. आविरादीनां करोतौ ॥ 1 ॥

वृ- आविरादीनां च करोतौ प्रत्यये विसर्जनीयः सकारमापद्यते।
व्या - आविरादीनां पदानां विसर्जनीयस्य सत्वं करोतौ कृञ् धातौ प्रत्यये भवति।
उदा- आविः कृतम्- आविष्कृतम्, प्रादुः कृतम्- प्रादुष्कृतम्, तिरः कृतम्-तिरस्कृतम्, नमः कृतम्-नमस्कृतम्। विभक्तिविशेषे च।

सू.अ- आविः आदि पदों का विसर्जनीय सकार हो जाता है, कृ धातुज रूप परे रहते।
विशेषः- तु.सू- आविर्हविर्ज्योतिरित्युत्तरश्चेत्ककारः (ऋ.प्रा,4.47)। तै.प्रा,8.24। नमस्करो परः (तै.प्रा,8.30)। वा.प्रा,3.23। निर्दुराविर्हविरसमासेऽपि (च.अ,3.63)। नमस्पुरसोगत्योः (पा.सू,8.4. 40)।

### 142. पुरः ॥ 2 ॥

वृ-पुरः शब्दस्य विसर्जनीयः सकारमापद्यते करोतौ।
उदा- पुरस्कृतो ब्राह्मणः, पुरस्कृता कन्या। पुरस्कृतमृणं निर्यातु। पुरस्कृतो रथः। प्राचुरीकृता निर्याताः पुरस्कृता वत्साः कुमारैः। परिपात्यन्ते मृगाश्च श्वभिरुर्याकृतरूपाः इति।
सू.अ-कृ धातुज रूप परे रहते पुरः पद का विसर्जनीय सकार हो जाता है।
विशेषः- तुलनात्मकं सूत्रम्- पूर्वः पुरः पूरिति पूर्व पद्यान् पदानि चापोद्य नवैतदेवम् (ऋ.प्रा,4.50)। पा.सू, 8.3.40।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 143. अडि ॥ 3 ॥

वृ-पादमर्धीये प्रत्यये विसर्जनीयः सकारमापद्यते। ओषधीष्कृधि।
व्या-पादमध्ये वर्तमानः विसर्जनीयः सकारमापद्यते कृञ् धातौ परे।

1 2 ॅ 3 1 2 1 2 3 1 2
उदा- वस्यसः-कृधिः। वस्यसस्कृधि। अथा नो वस्यसस्कृधि (1047)
1 2 ॅ 3 1 2 3 2 3 2 3 1 2 3 1 2 3 1 2
सा शन्तातामयस्करदप (102), प्र तवसस्कृतानि (78), ज्योतिष्कृदसि

1 2
(635), (करोताविति ) कृञ् परे इति किम् ? ज्योतिः पश्यन्ति (20)।

1 2 3 1 2 3 2 3 2
(पादमर्धीये) अडि इति किम् ? सहः (951), सूनृतावतः कर इत् (416),
नृभिर्यतः इति भाष्यम्।

सू.अ- पाद के मध्य में कृ धातुज रूप परे हो तो विसर्जनीय सकार को प्राप्त हो जाता है।

विशेषः - तुलनात्मकं सूत्रम्- ऋ.प्रा,4.43 । च.अ,2.65 ।पा.सू,8.3.50

## 144. इवऋ ॥ 4 ॥

वृ - इवलिङ्गायामृचि ऋकारपरेऽघोषे प्रत्यये विसर्जनीयः सकारमापद्यते।

व्या - इव लिङ्गायां इकार, वकारयुक्तायां ऋचि, ऋकारपरे अघोषे प्रत्यये विसर्जनीयः सकारमापद्यते।

1 2 3 1 2
उदा - ज्योतिः कृणोति- ज्योतिष्कृणोति सूनरी (303)। वरिवस्कृण्वन्,
3 1 1 2 3 2 3 1 2
परिस्कृण्वन् (899)। इव लिङ्गायामिति किम् ? साधः कृण्वन्तमवसे
3 2 3 1 2 ॅ 3 2
(217)। ऋकारपरे इति किम् ? दिवः ककुत्पतिः पृथिव्याः (27) पकारे
3 1 2 3 1
विशेषः। पुँसःकृष्टीनाम् (78) ऊष्मस्थानमित्युत्तरार्थम्। इ, व युक्तपदस्य इति तात्पर्यम्।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - इकार तथा वकार युक्त ऋचाओं में विसर्जनीय के बाद ऋ अथवा अघोष वर्ण हो तो वह सकार हो जाता है।

## 145. रि खिडि ॥ 5 ॥

वृ-रेफपरे पादोपान्तीये प्रत्यये विसर्जनीयः सकारमापद्यते।

व्या -पादोपान्तीयस्य खिट् इति संज्ञा। पादोपान्तीये रेफपरके अघोषे प्रत्यये विसर्जनीयः सकारमापद्यते।

उदा - सा शन्ताता मयस्करत् (102) । पादोपान्तीये खिडिति किम्? सूनृतावतः कर इत् (416)।

सू.अ- पादोपान्त में रेफ परे हो तो पूर्ववर्ती विसर्जनीय सकार हो जाता है।

विशेषः- तुलनात्मकं सूत्रम्- करं कृतं कृधि करत्करित्यपि परेषु (ऋ.प्रा,4.43)।

## 146. पि ॥ 6 ॥

वृ-पकारे रेफपरे पादोपान्तीये प्रत्यये विसर्जनीयः सकारमापद्यते।

व्या - रेफपर इत्यनुवर्तते। रेफपरे पादोपान्तीये पकारे प्रत्यये अस्थात् परः विसर्जनीयः सकारमापद्यते।

उदा- उद्वयम्- तमसः परि। उद्वयंतमसस्परि (महानाम्नी 5 साम), अगन्म तमसस्पारम् (स्तोभः 2.1) अविदाम तमसस्पारे (स्तोभः 2.1), दिवो अन्तेभ्यस्परि (367), दिवः सदोभ्यस्परि (312), देवो देवेभ्यस्परि (759), च्यावया सदसस्परि (298), निवृत्तानि । जातः परे ण (90), द्विषः परि (134), वसिष्ठः परि (241), अव्या वारैः परि (519), वृषा वृष्णः

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

1 2
परि(531) पादोपान्तीय इति किम् ? भिन्धिविश्वा अपद्विषः
3 23
परिबाधो। अस्थात् पर इति किम् ? अहमिद्धि पितुः परि (152)।
अस्था (सू 117)धिकारः॥

सू.अ- पादोपान्त में रेफ परे हो तो पूर्ववर्ती विसर्जनीय सकार हो जाता है।

विशेषः- तु.सू- पादान्तगते परीति च (ऋ.प्रा,4.44)। परावसान (वा.प्रा,3.31)। दिवस्सहसस्परिपुत्परः(तै.प्रा,8.28)। ततस्परौ ब्रह्मपरे । पञ्चम्याश्चाडेभ्यः पयादिवर्जम् (च.अ, 2.66,67)। पञ्चम्याः परावध्यर्थे (पा.सू,8.3.51)।

## 147. ठ्यदन्त्यपरे ॥7॥

वृ-कण्ठ्यदन्त्यपरे पकारे प्रत्यये विसर्जनीयः सकारमापद्यते।

व्या - अडि इत्यनुवर्तते। पादमध्ये वर्तमानः विसर्जनीयः कण्ठ्य,
3 1 2 3 2 3 1 2
दन्त्यपरे पकारे प्रत्यये सकारमापद्यते। उदा- ब्रह्माणं च बृहस्पतिम्
1 2र 1 2र
(91)। अत्र बृहः पतिं इति पदपाठे पकारोपरि वर्तमानः अकारः
2उ 3 2 उ 3 1 2
कण्ठ्यः तकारः दन्त्यः। कण्ठ्यपर इति किम् ? विश्वेदग्निः प्रति रक्षांसि (114)। अत्र पकारः मूर्धन्यदन्त्यपरः। अतः न सकारापत्तिः। अडि इति किम् ? नवोहिरण्यनेमयः पदं विन्दन्ति। अत्र पादमध्याभावात् न सकारापत्तिः।

2 3 2 3 1 2र 3 1 2
उदा - ब्रह्मणस्पते (139), इडस्पदे (63), गोष्पदे (स्तोभः)। शवसस्पतिः
3 23 1 2 3 1 2
(248), मित्रास्पान्ति (206)। पकारे ? सोमः कलशे(557), कण्ठ्यपरे ?
2उ 3 2 उ 1 3 2 3 3 2 3 2
विश्वेदग्निः (114), आयं गौः (630), उषसः (596.877), उरुः पृथुः

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(626)। दन्त्यपरे ? ज्योतिः पश्यन्ति (20), मधोः पपानः (294), इन्दुः पविष्ट (481), सुतः पवित्रम्(526.1399) । हिरण्यपावाः (564), पादमर्धीये? चन्द्रमाः(417)अनुप्रत्नासः आयवः(502) ।विश्वतः (393)

सू.अ- विसर्जनीय के परवर्ती पकार से परे कण्ठ्य या दन्त्य वर्ण हो तो विसर्जनीय सकार हो जाता है।

विशेषः-तु.सू- अन्तः पादं विग्रहेऽकारपूर्वः पतिशब्दे द्व्यक्षरे पुंस्प्रवादे (ऋ.प्रा,4.42)। पत्नीवेपतीपतेपतयेपतिष्पतिं परः (तै.प्रा,8.27)। यः पतौ गवानस्याः परवर्णम् । इडायास्पदे (च.अ,2.70,72)। षष्ठ्याः पतिपुत्रपृष्टपारपदपद्यपयस्पोषेषु (पा.सू,8.3.53)।

## 148. घेऽणः ॥ 8 ॥

वृ-दीर्घाक्षरे पादतृतीये एव विसर्जनीयः सकारमापद्यते।

व्या- अणः पादतृतीयस्य अण इति संज्ञा। पादतृतीये दीर्घाक्षरे प्रत्यये विसर्जनीयस्य सकारापत्तिः।

उदा- दिवः- पायुः। दिवस्पायुर्दुरोणयुः (39)। मित्रास्पान्ति (206)। घे पादतृतीये इति किम् ? । गिर्वणः पाहि। धुःपावकः (524) यः पात्रम् (424)। सप्तहे (आ.गा.1.6.12)।

सू.अ- तृतीयपाद में ही विसर्जनीय के बाद दीर्घ अक्षर हो तो विसर्जनीय सकार होता है।

विशेषः- अथोपान्तपश्यन्ति शब्दौ (ऋ.प्रा,4.48)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



### 149. यः ॥ 9 ॥

वृ-यः शब्दस्य विसर्जनीयः सकारमापद्यते।

व्या- यः शब्दस्य विसर्जनीयः पादतृतीये दीर्घे अक्षरे प्रत्यये सकारमापद्यते।

उदा - रायस्पूर्द्धि महाँ असि(346)। रायस्पोषं सहस्रिणम्, रायस्पोषं कुलायिनम्, रायस्पोषेण (ऋ वे 1.125.1) पादतृतीय इति किम् ? यः पात्रं हारियोजनम् (424)। यः शब्द इति किम् ? विशः पूर्वीः प्र चर चर्षणिप्राः (328)। सोमःपूषा (154)। बहुला भवन्ति पञ्चनिधने कश्यपपुच्छे (आ. गा. 3.8.10), नद्यस्पृणन्ति(607)। रायस्पूर्धि (346)। कण्ठ्ये विशेषः।

सू.अ - यः का विसर्जनीय सकार हो जाता है।

विशेषः- पकारः परे चेत् पूर्ववर्तिः यः इत्यस्य विसर्जनीयस्य सकारमापद्यते। रायः पूर्धि- रायस्पूर्धि , रायः पोषम्- रायस्पोषम् । तुलनात्मकं सूत्रम्- कामपोषपूर्धिशब्देषु रायः (ऋ.प्रा,4.55)। रायस्पोपरः (तै.प्रा,8.29)। रायः सहसः पोषपुत्रयोः (वा.प्रा,3.25)। रायस्पोषाद्धिषु च (च.अ,2.80)। पा.सू,8.3.53

### 150.भे स्वे मान्तस्थि ॥ 10॥

वृ- स्तोभे प्रत्ययेऽपि ह्रस्वे मकारान्तस्थि विसर्जनीयः सकारमापद्यते।

व्या- ह्रस्वे स्तोभे परे मान्तस्थि विसर्गस्य सत्वं भवति परिधि सामसु। गोष्पदे आङ्गिरसयोरङ्गिरसां व्रतद्धितीये सहस्वान्तसहसस्पतिः (आ.गा-188)(आ.गा 3,2.4), जमदग्निव्रते ज्योतिष्पद (आ.गा-201) (आ.गा 3.4.5), परिधिषु (आ.गा 2.10.3.5) निवृत्तानि । पतिलिङ्गे

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



कीर्त्ये हृदये (आ.गा 3.8.5), । मकारान्तस्थी इति किम् ? देवव्रते (आ.गा 3,5.6), अभि त्वा शू (233), वागादौ तु।

सू.अ- स्तोभ में मकारान्तस्थ विसर्जनीय के बाद ह्रस्व अक्षर हो तो विसर्जनीय सकार हो जाता है।

इति प्रथमो दशकः

0-----ॐ-----0

अथ द्वितीयो दशकः

(अपवादसूत्रम्)

## 151.नोष्मपरे ॥ 1 ॥

वृ-नोष्मपरे विसर्जनीयो विक्रियते।

व्या-ऊष्मपरे विसर्जनीयः न विक्रियते। अपवादसूत्रमिदम्। अत्र ऊष्मशब्देन क्षकारो गृह्यते।

उदा- प्रियः क्षपोवस्तुषु राजसि। क्षप्यादीनि।

सू.अ - ऊष्म वर्ण बाद में हो तो विसर्जनीय विकार को नहीं प्राप्त करता।

विशेषः- तुलनात्मकं सूत्रम्- शर्प्परेविसर्जनीयः (पा.सू,8.3.35)

## 152. पुं स्पर्शे ॥ 2 ॥

वृ-पुंकारः स्पर्शे प्रत्यये सकारमापद्यते।

व्या - इदानीं सकारागम उपदिश्यते। नोष्मपर इत्यनुवर्तते। पुं शब्दमकारात् नोष्मपरे स्पर्शे प्रत्यये सकारः व्यवधीयते। पुं कोकिलः- पुंस्कोकिलः। नोष्मपरे इति किम्? पुं क्षुरम्। पुंत्सारुकः । पुंस्कटः। स्पर्शे इति कि? पुं सालः- पुंसालः।

पुंस्करे। पुंश्चरति। पुंस्तत्र। द्वितीयेषु च। अघोषे ? पुं गायति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - पुं के बाद स्पर्श वर्ण हो तो सकार हो जाता है।

### 153. नो मध्यमवर्ग्ये ॥ 3 ॥

वृ-नकारो मध्यमवर्गीये प्रत्यये सकारमापद्यते।

व्या -नोष्मपरे इत्यनुवर्तते। नकारात् नोष्मपरे मध्यमवर्गीये अक्षरे प्रत्यये सकारो व्यवधीयते। द्वितीय तृतीय चतुर्थाः च ट त एते मध्यमवर्गाः ।

उदा- महान् चरसि। महाँश्चरसि, भवाँश्चरति भवाँष्टका भवाँस्तत्र। ऊष्मणि प्रत्यये अनुस्वारः व्यवधीयत इति अनुस्वारः। नोष्मपर इति किम् ? भवान् सरुणाम्। भवान्तसरुणाम्, महान्त्सुराणाम्। मध्यमवर्गीये इति किम् ? भवान् पारे । भवान्पारे। भवान् यजति।

सू.अ - नकार के बाद वर्ग के मध्यम वर्ग हो तो वह सकार को प्राप्त हो जाता है।

### 154. ऋक्चे ॥ 4 ॥

वृ-आर्चिकस्य द्वैधं च शब्द एव सकारमापद्यते।

व्या- ऋक् आर्चिके, चे चशब्दे प्रत्यय एव न, इत्यस्य सकार व्यवधानम्। अन्यत्र न।

1 2र 3 3 1 2 3 1
उदा- ज्यायान्- च । ततो ज्यायांश्च (620)। च शब्द इति किम् ? नि-या

2र 1 2र 3 1 1 2 3 1
मन्-चित्रं । नि यामं चित्रम्(135)। वज्रिश्चित्रम्(408.708)। जानः

3 1 2 3 1
क्षरन्। आजिगीषन् तम् (372)। आर्चिक इति किम् ? सेतुषाम्नि (आ.गा 1,7.11) शुक्रियपर्वसमापने?

सू.अ - आर्चिक में संयुक्त नकार को ही सकार होता है।

### 155. कान् त्स्वे ॥ 5 ॥

वृ-कांछन्दः स्वे प्रत्यये सकारमापद्यते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या -कान् शब्दात् स्वे प्रत्यये कान् शब्दे प्रत्यये सकारो व्यवधीयते। उदा- कान्-कान्। कांस्कान् भोजयति। कांस्कान् ह जयति। कांस्कान् नाशयति। कांस्कान् आमन्त्रये। स्वे प्रत्यय इति किम्? कान्- खनति। कान् खनति। कान् कटे। कान् पारे। कान् फलके।

सू.अ- कान् के बाद कान् पद हो तो नकार के बाद सकार व्यवधान हो जाता है।

(विसर्जनीयलोपः)

## 156. लुबुदेषसस्य व्यञ्जने ॥ 6 ॥

वृ- लुप्यते उदात्त एषसस्य इत्येषां व्यञ्जने प्रत्यये।

व्या- इदानीं विसर्गलोप उच्यते। एष, सः, स्यः एतेषां पदानां विसर्जनीयः उत्- उदात्तस्वरश्चेत् लुप्यते व्यञ्जने प्रत्यये।

3 2 3 2 3 2 3 2 उ 3 2 3 3 2 उ 3 3 1

उदा-एषः-ब्रह्मा । एष ब्रह्मा य ऋत्वियः (438)। एष स्य ते (531), एष

2 र 3 2 3 2 उ 3 2 3 2 3 2 1

स्य धार या सुतः (584), एष कोशे (556) स नो वसूनि (190), स त्वं

2 र 2 3 1 2 3 1 2 र 3 2 2 1

नः (810)। सः - सुन्वे । स सुन्वे यो (582)। क्व-स्यः-वृषभः। क्वऽ3स्य

2 3 1 3 2 3 1 2 3

वृषभो(142) एते शब्दाः । द्विषस्तरध्यै(428)। उत् इति किम्? उत् सः

2 1 2 3 1 2 3 1 2 2 3

देवः । उत्सो देवो हिरण्ययः (511)। व्यञ्जने इति किम् ? प्र-सः-अग्ने।

1 2 र 3

प्र सो अग्ने (108) । साम्नि चेत् सन्ध्यगीतम्।

सू.अ- उदात्त एषः सः तथा स्यः के बाद व्यञ्जन हो तो विसर्जनीय का लोप हो जाता है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विशेषः - तुलनात्मकं सूत्रम्- व्यञ्जने च। स्य एष च (वा.प्रा, 3.16,17)। एष स स्य इति (तै.प्रा,5.15)। एष च व्यञ्जने (च.अ,2.57)। स्यश्छन्दसि बहुलम् (पा.सू,6.1.133)।

(अपवादसूत्रम्)

## 157. नान् पूर्वः ॥ 7 ॥

वृ-नत्वन्पूर्वो लुप्यते।

व्या- न अन् पूर्वः। एष इत्यनुवर्तते । एष शब्दः अन् पूर्वश्चेत् विसर्गः न लुप्यते।

उदा- अनेषो गच्छति, अनेषो धावति। अन्यूनातिरिक्तमिति वा।

सू.अ- एषः के पूर्व अन् हो तो विसर्जनीय का लोप नहीं होता।

विशेषः-तु.सू-एततदोः सुलोपोऽकोरनञ्समासे हलि(पा.सू, 6.1.132)

(यकारलोपः)

## 158. यः ॥ 8 ॥

वृ-यकारश्च व्यञ्जने प्रत्यये लुप्यते।

व्या- म[3]हा[2]न् - हि - षः। म[3]हाँ[2] हि षः (381) प्रभृतीनि। इ[3]त्थे[1]त[2]रा[3] (7) दीन्यनुनासिकः । शं[1] यो र[3]भि[1] (33) अत्र व्यवधानोऽन्त्यविकारः (185) इति सूत्रेण अनुस्वारः श्रूयते। व्यञ्जने इति किम् ? अ[1]बो[2]ध्य[3]ग्निः[2](73)।

सू.अ- आगम के यकार का व्यञ्जन परे रहते लोप हो जाता है।

विशेषः-तु.सू- लोप धौ (वा.प्रा,4.37)। अवर्णपूर्वस्तु लुप्यते (तै.प्रा, 8.9)। आकारोपधस्य लोपः (च.अ.2.55)।

## 159. रमध्ये ॥ 9 ॥

वृ-स्वरमध्ये नैगिर्यकारं (सू 110) लुम्पति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या - स्वरमध्ये वर्तमानो यकारो लुप्यते इति नैगिमहर्षेः अभिप्रायः।

2 3 1 2
अग्नय् आयाहि- अत्र एकारस्य अय् भावः । अग्न आ याहि (1),

3 1 2 1 2र
ईनाइ। इनी (176 साम),तय इन्द्रं (249), स इन्द्रः (337)। रमध्य इति

1 2 3 1 3 2 3
किम् ? अचेति - अग्निः । अचेत्यग्निः (447)। पीतये (293)।
वैचारिकग्रहणात्। असवर्णयोर्मध्यगताया अन्तस्थाया लोपो भवतीति वचनात् असवर्णयोर्मध्यगतस्य लोपः।।

सू.अ- नैगि के अनुसार दो स्वरों के मध्यवर्ती यकार का लोप हो जाता है।

विशेषः- तु.सू- यवयोः पदान्तयोः स्वरमध्ये लोपः (वा.प्रा,4.125)। लोपः शाकल्यस्य (पा.सू,8.3.19)। स्वरापद्यवयोः पदान्तयोः (च.अ,2.21)

(वकारलोपः)

## 160. वमेके ॥ 10 ॥

वृ-वकारमप्येके आचार्या लुम्पन्ति। हावात्रादीनि (147)

व्या - स्वरमध्ये वर्तमानो वकारोऽपि लुप्यत इत्येके आचार्याः मन्यन्ते। न नैगिः। उदा- हाव् - आत्रा । हा- आत्रा । हावात्रा (गा. 250)।

सू.अ - कुछ आचार्यों का मत है कि दो स्वरों के मध्यवर्ती वकार का भी लोप हो जाता है।

इति द्वितीयो दशकः

0-----ॐ-----0

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ तृतीयो दशकः

(यकारवकारलोपः)

### 161. अर्ध वा ॥ 1 ॥

वृ - अर्ध वा वकारयकारयोर्लुम्पन्ति।

व्या- वकारयकारयोः अर्ध वा लुप्यते।

सू.अ- यकार और वकार में विकल्प से लोप होता है।

### 162. वं नैगिरुस्थे ॥ 2 ॥

वृ-वकारं नैगिरुस्थे लुम्पति।

व्या-नैगिमहर्षिणा उस्थे प्रत्यये एव वकारः लुप्यते इत्युच्यते। संहितापाठे उहुवाहाव् उहुवाहाव् इत्यत्र, प्रथमस्तोभस्थ अन्त्य उकारस्य आदेशात् वकारश्रवणं, तत् उकारे परे न श्रूयते। तथा ऊहुवाहाव् । उस्थ इति किम् ? धृष्णव् आगहि। शविष्ठ धृष्णवा गहि।

उदा- अष्टा- उपरि। का -उपरि। ता -उपरि। वैराजे (गा.693), पुष्पे (गा.1122), इलान्दाद्ये (आ.गा 207)पुरुषव्रते (आ.गा 219), उस्थे ?

3 1 2
ष्णवा गहि (347)।

सू.अ- नैगि के अनुसार बाद में वकार में उ हो तो उसका लोप हो जाता है।

विशेषः- तु.सू- यवयोः पदान्तयोः स्वरमध्ये लोपः (वा.प्रा,4.125)। नैगिशाखानुयायीनां मतानुसारेण यदि वकारस्य परं उ भवति चेत् वकारस्य लोपः भविष्यति। यथा अष्टौ उपरि ।अष्टाव् उपरि ।अष्टा उपरि। कौ उपरि । काव् उपरि। का उपरि। तौ उपरि। ताव् उपरि। ता उपरि। अत्र सन्ध्यमयवायावम् सूत्रेण वकारस्य प्राप्तिः । वं नैगिरुस्थे सूत्रेण व कारस्य लोपः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(अपवादसूत्रम्)

## 163. नोतौ ॥ 3 ॥

वृ- न त्वो तौ लुप्यते तत् । अचिक्रदायाम् ।

व्या- पूर्वोक्तो वकारः अचिक्रदायां (497) न लुप्यते। हावोतुः (आ.गा.135)। नत्वोतौ, उतौ परे वकारलोपो नास्तीति पक्षे अर्थः। उदाहरणमेतदेव।

सू.अ- वकार के बाद ओ हो तथा उसके बाद तु पद हो तो वकार का लोप नहीं होता।

(अत् लोपः)

## 164. अत्पटादीनामितौ ॥ 4 ॥

वृ - अच्छन्दः पटादीनामितौ प्रत्यये लुप्यते।

व्या -पटादीनां अच्छब्दः इतौ इति शब्दे प्रत्यये लुप्यते।

उदा - पटत् इति पटिति। भ्रमिति, द्रसिति, म्रसिति।

सू.अ- पटत् आदि पदों के बाद इति पद हो तो अत् अंश का लोप हो जाता है।

विशेषः - इति पदं परं चेत् पटत् इत्यादि पदस्थ अत् इत्यस्य लोपः भविष्यति। यथा -पटत् इति पटिति। म्रसत् इति म्रसिति। द्रसत् इति द्रसिति। उपर्युक्त सभी उदाहरणों में अत् अंश का लोप हो गया है।

तु.सू- अव्यक्तानुकरणस्यात इतौ (पा.सू,6.1.98)

(अभ्यस्त दकारलोपः)

## 165. दोऽभ्यासे ॥ 5 ॥

वृ-दकारः अभ्यासे लुप्यते।

व्या-पटादीनां दकारः अभ्यासे विषये इति शब्दे प्रत्यये लुप्यते।

उदा- पटद् इति- पटत्पटेति। द्रसद्द्रसेति। म्रसन्म्रसेति।

सू.अ- पटत् आदि पदों के अभ्यस्त दकार का इति परे होने पर लोप हो जाता है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विशेषः- इति पद परं चेत् पटत् इत्यादि पदस्य अभ्यस्त दकारस्य लोपः भवति । यथा पटत्पटद् इति -पटत्पटेति। द्रसद्द्रसद् इति - द्रसद्द्रसेति। म्रसन्म्रसद् इति-म्रसन्म्रसेति। उपर्युक्त स्थलेषु अभ्यस्त पदस्थ दकारस्य लोपः जातः एवं तदनन्तरं अस्थनामिनी सन्ध्यम् सूत्रेण सन्ध्यक्षर ए जातम्।

तु.सू- नाम्रेडितस्यान्त्यस्य तु वा (पा.सू,6.1.99)

(दकारलोपः)

## 166. पृषोदरादीनाम् ॥6॥

वृ-पृषोदरादीनां च दकारो लुप्यते।

व्या-पृषोदरादीनां पदानां दकारः लुप्यते।

उदा-पृषत् उदरम् - पृषोदरम्। पृषोदरे। पृषादानम्।

सू.अ- पृषोदरादि गण में पठित शब्दों के दकार का लोप हो जाताहै।

विशेषः- पृषोदर आदि पदानां दकारस्य लोपः जायते। यथा - पृषद् उदरे- पृषोदरे। पृषद् आदानम् - पृषादनम्। अत्र अनेन सूत्रेण दकारस्य लोपः एवं अस्थनामिनी सन्ध्यमिति सूत्रेण सन्ध्यक्षर ओ एवं द्वितीय उदाहरणेन रौघम् सूत्रेण दीर्घं प्राप्य रूपं निष्पन्नम् ।

तु.सू- पृषोदरादीनि यथोपदिष्टम् (पा.सू,6.3.109)

(सकारलोपः)

## 167. उदः स्थास्तम्भ्वोः ॥7॥

वृ-उत्पूर्वयोः स्थास्तम्भयोरादिर्लुप्यते।

व्या - स्थास्तम्भ्वोः उदः परयोः सकारो लुप्यते।

उदा - उत् स्थाता उत्थाता । उत् -स्तम्भनम्। उत्तम्भनम्। उत्पूर्वयोः स्थास्तम्भ्वोः सकारो लुप्यते। उत्थास्यति। उत्थानिकामुत्तम्भयति। शकटमुत्तम्भिता। एवं विद्युत् स्थिता। विद्युत्- स्तम्भिता। विद्युत् स्तम्भयति। समं उत् पूर्वयोरिति किम् ? विद्युत्- स्थिता । विद्युत्स्थिता।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ- उत् पूर्वक स्था और स्तम्भ धातुओं के आदि सकार का लोप हो जाता है।

विशेषः- तु.सू- उत्पूर्वः सकारो व्यञ्जन परः (तै.प्रा,5.14)। उदः स्था स्तम्भोः पूर्वस्य (पा.सू,8.4.61)। लोप उदः स्थास्तम्भोः सकारस्य (च.अ,2.18)। अश्वात् स्थे तकारं संज्ञायाम् (वा.प्रा,4.98)

(उच्चारणगतलोपः)

## 168. तुल्ये ॥ 8 ॥

वृ-तुल्ये स्थाने लुप्यते।

व्या-तुल्यस्थाने प्रत्यये सकारः।

उदा- आथर्वणे (आ.गा 23) दे॑वं व॒हन्ति (31), इषं॑ तो (996), इमास्त इ॒न्द्र (187), वित्तादीनि। पुनः पुनः प्रसङ्गश्च। त ओहैः (434), यावाहुः (361), तुल्य इति किम् ? सुरूप इत् (277)। विशस् स्तवेत। विश स्तवे तातिथिः। प्रातरग्निः (85)।

(Accent numerals printed above the syllables: 3 1 2 over देवं वहन्ति; 1 2 3 over इषं तो; 3 1 2 over इमास्त इ; 3 over न्द्र; 3 1 2 over त ओहैः; 2 3 2 over यावाहुः; 2 3 2उ over सुरूप; 3 1 2 3 over विश स्तवे; 1 2 over तातिथिः; 3 2 3 1 over प्रातरग्निः.)

सू.अ- समानस्थानीय वर्ण परे रहते उच्चारण में प्राप्त प्रथमवर्ण का लोप हो जाता है।

विशेषः- उच्चारणकाले आथर्वणे एवं इन्द्रपदे क्रमशः थकार तथा नकारस्य प्राप्तिर्भवति, येन अनेन सूत्रेण लोप प्राप्ते उपर्युक्तरूपं सिद्ध्यति।

## 169. रात्स्थाजरे ॥ 9 ॥

वृ-स्वराद् द्वैधमन्तस्थाजपरे वर्णे प्रत्यये लुप्यते।

व्या - अन्तस्थाच अच् च तयोः समाहारः स्थाजम्। अच् विशिष्टान्तस्थवर्णः तस्मिन् परे स्वरात्परः संयोगादिः लुप्यते। उदा- न- वेद्यं- अबोध्यग्नि, अत्र द्य ध्य इत्यत्र रात् सण् (269) इति

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सूत्रात्प्राप्तस्य द्विर्भावस्य लोपः द्द्य - द्ध्य इति न भवति इत्यर्थः। न वे द्य (5), अबोध्यादीनि (73), स्वरादिति किम् ? निवृत्यर्थम्। अन्तस्थाजरे वर्णे अच्छादीनि। विश्व न्व (स्तोभः) अपदान्तः इति किम्? दुघां हुवे (295)।

सू.अ - स्वर के बाद अन्तस्थाजय वर्ण होने पर उच्चारण प्राप्त द्वित्व वर्ण का लोप हो जाता है।

**170. रः॥10॥**

वृ-रेफश्च तुल्यस्थाने लुप्यते।

व्या- पूर्वस्य स्वराक्षरस्य दीर्घत्वञ्च। वह्निर् रथानाम्। युक्ता वह्नी रथा नाम् (149)। बर्ही रशनाभिः (523)। वृषा हरी राजे (562)। र पूर्वयोश्च दीर्घत्वम्।

सू.अ - रेफ के बाद तुल्य स्थानीय वर्ण रेफ हो तो उसका लोप हो जाता है।

विशेषः- तुलनात्मकं सूत्रम्- रेफोदयो लुप्यते। द्राधितोपधा ह्रस्वस्य (ऋ.प्रा, 4.28,29)। अनवर्णपूर्वस्तु रेफपरो लुप्यते (तै.प्रा,8.16)। भाव्युपधश्च रिद्धिविसर्जनीय (वा.प्रा,4.34)। रेफे लुप्यते दीर्घं चोपधा (वा.प्रा,4.35)। रेफस्य रेफपरे (च.अ,2.19)। रोरि (पा.सू,8.3.14)।

इति तृतीयो दशकः

**0-----ॐ-----0**

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थो दशकः

## 171. सोष्मण ऊष्मा ॥ 1 ॥

वृ-सोष्मणश्चोष्मा तुल्यस्थाने लुप्यते।

व्या- तुल्यस्थान इत्यनुवर्तते। ऊष्मयुक्ताक्षरस्यापि तुल्यस्थाने परे रात्सण् इति प्राप्त द्वित्वे प्रथम ऊष्मा लुप्यते। सख्यं ते (324), अच्छा नप्त्रे (21), दू ढ्यम् (113), अबोध्यादीनि (73), तुल्य इति किम्? विभावसो (86)।

सू.अ- उच्चारण प्राप्त ऊष्मण वर्ण का लोप हो जाता है, यदि तुल्य स्थानीय सोष्मण वर्ण परे हो।

विशेषः- तुल्यसूत्राणि- सोष्मा तु पूर्व्येण सहोच्यते सकृत्त्वेन (ऋ.प्रा,6.7)। प्रथमैर्द्वितीयैस्तृतीयैश्चतुर्थाः (वा.प्रा,4.108)। सोष्माणि पूर्वस्यानुष्मा (च.अ,1.94)।

(तृतीयवर्णस्य अघोषभावः)

## 172. तृतीयः परगुणम् ॥ 2 ॥

वृ-तृतीयः परगुणमापद्यते।

व्या- वर्गतृतीयो वर्णः परगुणम्। परस्य अक्षरस्य समानगुणत्वं आपद्यते, अघोषे प्रत्यये परे।

उदा- वाचो व्रते (आ.गा.167) अस्तु श्रौषड् पुरः । अस्तु श्रौषट् पुरः (461) । अघोषे इति किम् ? तद् वः । तद्वो गाय (115)। शषसेषु प्रत्ययेषु च तृतीयः परगुणमापद्यते। यद् -सोमम्। यत्सोममिन्द्र (384)। तृतीय इति किम् ? भवान् पारे।

सू.अ - वर्ग के तृतीयवर्ण परभाव को प्राप्त होते हैं।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विशेषः- अत्र सर्वप्रथमतया ट् एवं त् क्रमशः ड् एवं द् रूपेण परिवर्तितम्। तदनन्तरं अनेन सूत्रेण प एवं स अघोष वर्णानां परं विद्यमानत्वात् एते पुनः अघोषः अर्थात् प्रथमवर्णं प्राप्तम्।

(प्रथमवर्णस्य परसवर्णभावः)

### 173. अन्त्ये ॥ 3 ॥

वृ- अन्त्ये च प्रत्यये तृतीयोऽन्त्यमेवापद्यते।

व्या-वर्गान्त्ये प्रत्यये तृतीयः परसवर्णं परस्य अक्षरस्य समानं अन्त्याक्षरत्वं आपद्यते।

23क 2 र 2 3 1
उदा- उदग् न्यग्वा । उ द ङ्न्यग्वा (279), बड्- महान्। बण्महान् (276),

3 23 3 1 2 2र 3 1 2र
हव्यवाण् न । हव्यवाङ् न सुमद्रथः (447), व्यख्यन् महिषो दिवम् (631,1377)।

सू.अ-वर्ग के तृतीयवर्ण के बाद यदि वर्ग का अन्त्य वर्ण हो तो तृतीयवर्ण अन्त्य वर्ण हो जाता है।

विशेषः- तुलनात्मकं सूत्रम्-उत्तमानुत्तमेषूदयेषु (ऋ.प्रा,4.3)। उत्तमपर उत्तमं सवर्गीयम् (तै.प्रा, 8.2)। पञ्चमेपञ्चमम् (वा.प्रा,4.121)। यरोऽनु नासिकेऽनुनासिको वा (पा.सू,8.4.45)।

(दन्त्यवर्णस्य छकारभावः)

### 174. दन्त्यात् शः छम् ॥ 4 ॥

वृ-दन्त्यात् परः शकारश्छकारमापद्यते।

व्या-दन्त्यात् वर्णात् परः शकारः छकारमापद्यते।

3 1 2र
उदा-भृगुवत् - शुचिम्। और्वभृगुवच्छुचिम् (18) चित्र - इत् - शिशोः।

3 23 3 2 3 1 2
चित्र इच्छिशोः (64)यत् - शक्रासि। यच्छक्रासि (264) यत् - शिक्षसि।

1 2र 2 3 1 3 23 3 1
यच्छिक्षसि (296) यस्य-त्यत् - शम्। यस्यत्यच्छम् (392) दिविसञ्छुक्र

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(83) मघवञ्छग्धि (274) दन्त्यात् इति किम् ? निश् - शशाः। पृथिव्या निश्शशा अहिम् (410)। अनु शूर (253)।

सू.अ - दन्त्य वर्ण के बाद शकार छकार हो जाता है।

विशेषः- अत्र सर्वत्र दन्त्यवर्णात्परं शकारस्य छकारं जातम्। तदनन्तरं श्लो सूत्रेण दन्त्यवर्णस्य परसवर्ण प्राप्तम्।
तुलनात्मकं सूत्रम्- तालव्येऽघोष उदये चकारम् (ऋ.प्रा,4.11) छकारं तयोरुदयः शकारः (ऋ.प्रा,4.12)। शकारे च (वा.प्रा,4.95)। तकारश्चकारं शचछपरः। नकार एतेषु ञकारम् (तै.प्रा, 5.22.24)। तवर्गीययाच्छकारः शकारस्य (च.अ,2.17)। शश्छोऽटि (पा.सू, 8.4.63)

(अपवादसूत्रम्)

## 175. वमोदयमेके ॥ 5 ॥

वृ - एवमुदयं शकारमेके इच्छन्ति कुर्वन्ति। नैनांश्चोत विश्लोकान्त्सन्नशति श्मश्रूणि इति प्रत्ययाः।

व्या- लुप्यत इति अनुवर्तते। एवं आ उदयं प्रथमं-शकारं-लुप्तमिति एके मन्यन्ते। पदारम्भे संयुक्ताक्षरे वर्तमानं प्रथमं शकारं आ अल्पं लुप्तं इन्द्र, श्मश्रूणि। अत्र श्म इति नास्ति।
सू.अ - कुछ आचार्यों का मत है कि दन्त्य वर्ण का परवर्ती शकार ही रहता है।

(हकारस्य चतुर्थवर्णभावः)

## 176. तृतीयाद्धश्चतुर्थम् ॥ 6 ॥

वृ-तृतीयात्परो हकारश्चतुर्थमापद्यते। एकेषामित्यधिकारो न नैगेः।
व्या- वर्गतृतीयात् परः हकारः चतुर्थमापद्यत इत्येके आचार्याः मन्यन्ते। वाग्- ह । वाग्घ (स्तोभ.2.8)। तृतीयमिति किम् ? उत्तमं-

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



3 1 232 3 2
हविः। सोमो य उत्तमं हविः (512)। वणिक् हरति। वणिग्घरति। षट् हरति। षड्ढरति। त्रिष्टुप् हरति। त्रिष्टुब्भरति इति।

सू.अ - वर्ग के तृतीयवर्ण के बाद हकार हो तो वह उस वर्ण का चतुर्थ वर्ण हो जाता है।

विशेषः-तुलनात्मकं सूत्रम्- पदान्तैस्तैरेव तृतीयभूतैस्तेषां चतुर्थानुद्यो हकारः (ऋ.प्रा,4.5)। हश्च तस्मात् पूर्वचतुर्थम् (वा.प्रा,4.122)। झयो होऽन्यतरस्याम् (पा.सू, 8.4.6) तेभ्यः पूर्वचतुर्थो हकारस्य (च.अ,2.7)

## 177. ऊष्मा स्थानम्॥ 7 ॥

वृ-ऊष्मा च परसस्थानमापद्यते।

व्या- ऊष्मा च परसस्थानं परस्य अक्षरस्य समानस्थानत्वं प्रतिपद्यते।

3 2 3 1
उदा- दिवस् -चित्रम्। दिवश्चित्रम् (484)। अत्र दन्तस्थानस्य सकारस्य

31 2 3 1
तालुस्थान शकारापत्तिः। उषसश्चित्रम् (40), निः-शशाः। निश्शशाः

3 2 3 2 3 3 2 3 2 3 2 3
(410)। अग्निः- समिधा। अग्निस्समिधा (73)। दिवः-ककुत्। दिवःक

1 3 1 2 2र 3
कुत् (27)। अत्र जिह्वामूलीयापत्तिः। दुष्वप्न्यम् (141) पतिःपृथि (27)।

सू.अ - उष्मन् वर्ण परभाव को प्राप्त हो जाता है।

(दन्त्यवर्णस्य परसवर्णभावः)

## 178. दन्त्यं मध्यमवर्गे ॥ 8 ॥

वृ-दन्त्यवृत्ति परं सस्थानमापद्यते मध्यमवर्गीये प्रत्यये। और्वभृगुव (18) इत्यादीनि।

व्या-दन्त्यमक्षरं मध्यमवर्गीये अक्षरे प्रत्यये (वर्ग प्रथमपञ्चमौ हित्वाशिष्टं मध्यमं) परसस्थानमापद्यते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदा- यत् जायथाः- य[1]ज्जाय[2र]थाः (601,1429)। पश्यन् जन्मानि- पश्[2]य[3] ज्ञ[1]न्मा[2]नि (638) भवान् जयति। तज्जयति। चरंश्चरन्(64, स्तोभः) सु[1]श्च[2] न्द्रा[3]श्चर्यादीनि (1023,(सुश्च[2र]न्द्र-1024)। दन्त्यमिति किम्? वणिक् चरति। मध्यम वर्गीय इति किम् ? ककुत् पतिः क[3]कु[1]त्प[2र]तिः (27)। भवान् परे।

सू.अ - दन्त्य वर्ण परभाव को प्राप्त हो जाता है। यदि उसके बाद मध्यमवर्गीय वर्ण हो तो।

विशेषः- तुलनात्मकं सूत्रम्- तकारवर्गश्चकारवर्गे। चकारवर्गम् (वा.प्रा,4.94)। चवर्गीये घोषवति (च.अ, 2.11)।

**179. श्लोः ॥ 9 ॥**

वृ- शकारलकारयोः प्रत्यययोः परस्थानमापद्यते।

व्या- शकारलकारयोः प्रत्यययोः दन्त्यमक्षरं परसवर्ण आपद्यते। उदा- भृगुवत् शुचिम्। भृगु[1]व[2र]च्छुचिम् (18)। अत्र दन्त्यस्य तालव्यम्। उद्यन् उत् यन् लोकान् । उद्यल्लोकान् (स्तोभ.2.10)। तत् श्लोकः तच्छ्लोकः। ऋक्श्लोकः। पर्षच्छ्लोकः। भवाँल्लुनातीति।

सू.अ- शकार तथा लकार बाद में हो तो दन्त्य वर्ण परस्थानीय हो जाता है।

विशेषः- तत् श्लोकः इत्यत्र दन्त्याच्छश्छम् सूत्रेण शकारस्य छकारं, तदनन्तरं अनेन सूत्रेण तकारस्य चकारं जातम्। भवान् लुनाति इत्यत्र अनेन सूत्रेण विकारं जातम्।

तु.सू- तकारो जकारलकारयोस्तौ (ऋ.प्रा, 4.10)। छकारं तयोरुदयः शकारः (ऋ.प्रा, 4.12)। तकारश्चकारं शचछपरः । लपरौ लकारम् (तै.प्रा.5.22,25)। तकारो ले लम् । स्वरश्छकारे चकारेण सर्वत्र

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(वा.प्रा.4.12,24)। तकारस्य शकारलकारयोः परसस्थानः(च.अ, 2.13)

(मकारस्य परसवर्णभावः)

## 180. मो सन्ध्यः ॥ 10 ॥

वृ-मकारश्च सन्ध्यः परस्थानमापद्यते।

व्या- सन्धौ भवः सन्ध्यः। पादमध्ये वर्तमानः मकारः परसवर्णं आपद्यते।

उदा- त्वां- काष्ठा । त्वाङ्काष्ठा (234)। वङ् गोऋजीकम् (313), निङ् घृतवन्ति रोह (532), उदकन्नयन्तम् । अग्निं दूतम्। अग्निन्दूतम् (3) तन्ते मदम् (383)। सन्ध्य इति किम्? त्रिष्टुप् मकारे। पादान्ते वर्तमानः मकारः प्रकृत्या वर्तते। मित्रमिवप्रियम्। अत्र मस्सन्ध्यः सूत्रः साधु ।

सू.अ - संयुक्त मकार पर भाव को प्राप्त हो जाता है।

विशेषः-तु.सू- विस्थाने स्पर्श उदये मकारः सर्वेषामेवोदयस्योत्तमं स्वम् (ऋ.प्रा,4.6)। मकारस्पर्शपरस्तस्य सस्थानमनुनासिकम् (तै.प्रा,5.27)। स्पर्शे परपञ्चमम् (वा.प्रा,4.12) अनुस्वारस्य ययि परसवर्णः। तोर्लि । शश्छोटि (पा.सू,8.4. 58, 60, 63)। मकारस्य स्पर्शे परसस्थानः (च.अ,2.31) ।

(मकारस्य परसवर्णभावः)

## 181. रणमपि स्थायाम् ॥ 11 ॥

वृ-करणमप्यन्तस्थायामापद्यते।

व्या - करणमपि मकारोपि अन्तस्थायां प्रत्ययभूतायां परसवर्ण-मापद्यते।

उदा- कृविं यथा । कृविय्यथा (214)। प्रवोचं यानि (612) घर्मरोचने (आ.गा 279 उद्यं लोकान्। उद्यँल्लोकान्। इमां लोकान्। इमाँल्लोकान् )

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



1 2 3                  1 २ 2 र
प्रेष्ठं - वः। प्रेष्ठंव्वो (5)। सलिलं लेला । सलिलल्लेला (आ.गा.226)।
2 र
प्रभृतीनि। त्वां विप्रासः (42) रणमपि इति पदमधिकं तद्धिनापि विवक्षितार्थसंभवात्। विशेषार्थम् यवल एतेषां परसवर्ण इत्येकः पक्षः। परसवर्ण न इत्येकः पक्षः।

सू.अ- संयुक्त मकार के बाद अन्तस्था वर्ण हो तो मकार पूर्व का अङ्ग हो जाता है।

विशेषः- तुलनात्मकं सूत्रम्- रेफोष्मपरः (तै.प्रा,13.2)। यवकारपरश्चै-केषामाचार्याणाम् (तै.प्रा,13.3)।

(मकारस्य अनुस्वारभावः)

## 182. अनुस्वारमेके ॥ 12 ॥

वृ-अनुस्वारं चैके आचार्या मन्यन्ते। प्रेष्ठं वः प्रभृतीनि।

व्या- मकारः अन्तस्थायां प्रत्ययभूतायां अनुस्वारमापद्यते इत्येके
2 3 1 2          1 2 3
आचार्याः। कृविं यथा (214), प्रेष्ठम्व्वो (5) इत्येवोदाहरणम्।

सू.अ - कतिपय आचार्यो का मत है कि सन्ध्य मकार अनुस्वार हो जाता है।

## 183. रेफोष्मसु ॥ 13 ॥

वृ-रेफोष्मसु अनुस्वारमापद्यते।

व्या- अनुस्वारमित्यनुवर्तते। मकारः रेफोष्मसु प्रत्ययेषु अनुस्वारं आपद्यते।

2 3 1 2 3                  1 2
उदा- सोमं राजानम्। सोमँ राजानम् (91)। सोमं श्रीणन्ति। सोमँश्रीण
3                  3 1 2          2 र 3
न्ति (1006)। विष्णुं सूर्यम्। विष्णुँ सूर्यम् (91)। जेतारं हेतारम् । जेतारं
1 2          3 1 2 3 1 2
हेतारम् (283)। उभयँ शृणवत् (290)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ- रेफ और ऊष्मवर्ण बाद में हो तो सन्ध्य मकार अनुस्वार हो जाता है।

विशेषः-तु.सू- रेफोष्मणोरुदययोर्मकारोऽनुस्वारं तत्परिपन्नमाहुः (ऋ.प्रा,4.15)। अनुस्वार रोष्मसु मकारः (वा.प्रा,4.1)। मोनुस्वारः (पा.सू,8.3.23)।

## 184. हिनमपरे च तत्परम् ॥ 14 ॥

वृ-हकारे नमपरे तत्परमापद्यते। यत्परः स हकारो भवतीति।

व्या -मकारः हि हकारे नमपरे नकारमपर प्रत्यये तत्परमापद्यते। यत् परः स हकारो भवति तत्स्वरूपं आपद्यते।

उदा - तृणम् ह्नुते- तृणन्ह्नुते । तृणं ह्मलति- तृणम्ह्मलति। किम् ह्नुते- किन्ह्नुते। किम् ह्मलयति- किम्ह्मलयति।

सू.अ- ह के बाद न या म हो तो पूर्ववर्ती संयुक्त मकार क्रमशः नकार और मकार हो जाता है।

विशेषः-तु.सू- हे मपरे वा (पा.सू,8.3.26)। नपरे न (पा.सू, 8.3.27)।

इति चतुर्थो दशकः

0-----ॐ-----0

अथ पञ्चमो दशकः

## 185. व्यवधानोऽन्त्यविकारः ॥ 1 ॥

वृ-व्यवधानोऽनुस्वारो भवति अन्त्यविकारे।

व्या- अनुस्वारं इत्यनुवर्तते। अन्त्यविकारः इत्यत्र अन्त्यस्य वर्गान्त्यस्य अर्थात् नकारस्य विकारः अनुस्वारव्यवधानः। तद्रूपेण श्रवणं भवति क्वचित्। दीर्घात्परस्य नकारस्य इदं सम्भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



3 1 2र 4 5 4 5

उदा- ऋतून् अनु । ऋतूँरनु (229)। चरँश्चर (64, साम 106), दाशिवान् वोचे । दाशिवाँवोचे (97)। काँस्कान् प्रभृतीनाम्।

1 2 3 2 उ 3

अन्त्यविकार इति किम् ? मयस् करत् । मयस्करत्(102)। त्वां काष्ठा (234) प्रभृतीनाम्। रेफोष्मसु इत्यधिकारः।

सू.अ- अन्त्य विकार होने पर अनुस्वार का व्यवधान होता है।

विशेषः- तु.सू- नकारस्य लोपरेफोष्मभावे पूर्वस्तत्स्थानादनुनासिकः स्वरः (ऋ.प्रा,4.80)। नकारस्य रेफोष्मयकारभावाल्लुप्ते च मलोपाच्च पूर्वस्वरोऽनुनासिकः (तै.प्रा,15.1)। अनुनासिकमुपधाप्रागन्तःस्थायाः (वा.प्रा, 3.131)। नकारमकारयोर्लोपे पूर्वस्यानुनासिकः (च.अ, 1.67) ।अनुनासिकात्परोऽनुस्वारः (पा.सू,8.3.4)।

(ककारव्यवधानः)

## 186. अन्त्यात् प्रथमोऽघोषे ॥ 2 ॥

वृ-अन्त्यात्परः प्रथमो व्यवधीयते अघोषे प्रत्यये।

व्या- अन्त्यात् वर्गान्त्यात् अघोषे प्रत्यये प्रथमः वर्गप्रथमः व्यवधीयते आगमः भवति।

उदा- अर्वाङ् स्वर्णज्योतिः- अर्वाँक्स्वर्णज्योतिः। प्रत्यङ्क्शेते। प्रत्यङ्क् षण्डे। प्रत्यङ्क्सारे। गां शेते। गां षण्डे। गां साये। यानि चान्यानि।

2र 3 1 2

अघोषे इति किम् ? यं नमस्यन्ति। यन्नमस्यन्ति (54)।

सू.अ- वर्ग के अन्तिम वर्ण के बाद अघोष वर्ण हो तो वर्ग के प्रथमवर्ण का व्यवधान हो जाता है।

विशेषः- उपरोक्त उदाहरणेन अन्तिमवर्णस्य परं श ष स अघोष वर्णत्वात् क् प्रथमवर्णस्य व्यवधानः भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तु.सू- ङकारेऽघोषोष्मपरेऽन्तरैके ककारम् (ऋ.प्रा,4.16)। ङपूर्वः ककारः सषकारपरः (तै.प्रा,5.32)। ङनौ ताभ्यां सकारे (वा.प्रा,4.14)। ङणनेभ्यः कटतैः शषसेषु (च.अ,2.9)। ङ्णोः कुक्टुक्शरि (पा.सू,8.3.28)।

(तकार व्यवधानम्)

## 187. नात्सि ॥ 3 ॥

वृ-नकारात् सि प्रत्यये तकारो व्यवधीयते।

व्या- नकारात् सकारे प्रत्यये तकारो व्यवधीयते आगमो भवति। उदा- महान् समुद्रः । महान्त्समुद्रः (429)। हरिवान् सुतानाम् । हरिवान्त्सुतानाम् (226)। केतून्त्समीर्त्सति(608)। तिलान्त्सायी। भवान्त्सायी। महान्त्सायी। नात् त् सि इति पदच्छेदः।

सू.अ- नकार के बाद स हो तो तकार का व्यवधान होता है।

विशेषः- तु.सू- टकारनकारयोस्तु । आहुः सकारोदययोस्तकारम् (ऋ.प्रा,4.17) । टनकारपूर्वश्च तकारः (तै.प्रा,5.33)। नश्च (पा.सू, 8.3.30)।

## 188. टान्तमेके ॥ 4 ॥

वृ-टं पूर्वरूपं सि प्रत्यये तकारो व्यवधीयते। प्रकृत्या नैगिः।
व्या-टकारान्तं पदं सकारे प्रत्यये तकारव्यवधानमापद्यते।
उदा- षट् सा । षट् त्सा भोजयति। षट् सन्तः षट्त्सन्तः। षट् स्वितम्। षट्त्स्वितम्। षट् स्विति कायिनः। षट्त्स्वति कायिनः। प्रकृत्या नैगिः षट्सा इति।
सू.अ-टकार के बाद सकार हो तो तकार का व्यवधान होता है।
तु.सू- टकारात्सकारे तकारेण (च.अ,2.8)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(सकारागमविधानम्)

**189. ससंकरोतौ ॥ 5 ॥**

वृ-सं पूर्वरूपं करोतौ प्रत्यये सकारो व्यवधीयते।
व्या - सं इति पदं करोतौ प्रत्यये सकारव्यवधानं आपद्यते।
उदा- सं करोति। संस्करोति। सं कर्ता । संस्कर्ता। सं करिष्ये । संस्करिष्ये इत्युक्तम्। विशेषे च।

सू.अ - सं के बाद कृ धातुज रूप हो तो सकार का व्यवधान होता है।

विशेषः-तु.सू- सम्पूर्वः सकारः कुरुपरः (तै.प्रा,5.6)। सम्परिभ्यां सकारादौ करोतौ (च.अ,4.58)। संपुंकानां सो वक्तव्यः (पा.सू, 8.3.34 वार्तिकः)।

**190. अङ्गव्यवाये चाङ्गपरः ॥ 6 ॥**

वृ-अङ्गव्यवाये चाङ्गात् परो भवति सकारः।
व्या-अङ्गव्यवाये च सकारः अङ्गात् परो भवति।

उदा- सम् अकरोत्-समस्करोत्। सम् अकुरुताम्- समस्कुरुताम्। सम् अकार्षीत्- समस्कार्षीत्। सम् चिकीर्षति। सञ्चिस्कीर्षति। समस्कुर्वन् ताण्ड्यब्राह्मणम् -15.3.29। अत्र कृञ्धातोः अङ्गं अकारः अकरोदित्यत्र। तेन व्यवधाने तस्मात् परः सकारः।

सू.अ - सम् के बाद व्यवाय होने पर भी कृ धातुज के ककार से पूर्व सकार का व्यवधान होता है।

**191. कृ चकारमस्वयं दृष्टे ॥ 7 ॥**

वृ-कृ चकारमापद्यते अस्वयं दृष्टे।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या-समित्यनुवर्तते। सकारान्तं पदं अस्वयन्दृष्टे भूतकालवाचके सति कृचकारं कृञ् धातोः चकारे प्रत्यये आगमिकः सकारः चकारात्परो भवति।

उदा- सं चक्रतुः। संचस्क्रतुः । सं चकार। संचस्कार। सं चक्रुः । संचस्क्रुः। सं चक्रे । संचस्क्रे। सं चकाते। संचस्काते। सं चक्रिरे। संचस्क्रिरे। चकारे इति चेत् साधु।

सू.अ- सम् पूर्वक कृ धातु को चकार हो जाता है यदि परोक्ष व्यापार का अर्थ व्यक्त हो।

विशेषः- अत्र कृ कारस्य अभ्यासे ककारः चकाररूपेण परिवर्तनं भवति। तदनन्तरं अङ्गव्यवाये चाङ्गपरः सूत्रेण सकारस्य व्यवधानप्राप्ते उपरोक्तरूपाणि सिद्ध्यन्ति।

### 192. पर्युपभूषणप्राचुर्यवाक्येषु ॥ 8 ॥

वृ-परि उप इति पूर्वरूपं सकारो व्यवधीयते भूषणप्राचुर्यवाक्येषु।

व्या- परि उप इति पूर्वरूपं भूषणप्राचुर्यवाक्येषु कृञ् धातुप्रत्यये सकारो व्यवधीयते।

1 2 3 1 2र 3 1
उदा- परि कृतम् - परिष्कृतम्। गोभिर्भङ्गं परिष्कृतम् (487) परिष्कृण्व

2र 3
न्ननिष्कृतम् (899) उपकरोति- उपस्करोति ब्राह्मणम्। उपस्कारं जल्पति। भूषणप्राचुर्य इति किम्? परिकृतं उपकृतमन्यत्र।

सू.अ-भूषण, प्राचुर्य आदि अर्थ होने पर पूर्ववर्ती परि, उप आदि के बाद कृ धातुज रूप होने पर सकार का व्यवधान होता है।

विशेषः- तु.सू- परीति पद्ये कृपरे षकारः। परिष्कृण्वन्ति वेधसः (ऋ.प्रा, 4.85,87)। परिष्कृते षकारेण (वा.प्रा,,3.53)। संपर्युपेभ्यः करोतौ भूषणे। समवाये च। उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु च (पा.सू, 6.1.137-139)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 193. अवमर्यादावर्चस्कयोः ॥ 9 ॥

वृ-अव इति पूर्वरूपं सकारो व्यवधीयते मर्यादावर्चस्कयोः।

व्या-अव इति पूर्वरूपं मर्यादावर्चस्कयोरर्थे कृञ् धातोः प्रत्यये सकारो व्यवधीयते।

उदा- अवस्करोऽयं ब्राह्मणः अस्मत्तः मर्यादां बध्नीते। वर्चस्के ? अवकरोऽन्यः।

सू.अ - मर्यादा , वर्चस्क अर्थक पदों में अव के बाद कृ धातुज रूप हो तो सकार का व्यवधान होता है।

विशेषः – तु.सू- वर्चस्के वस्करः (पा.सू,6.1.148)

## 194. पारपर्वते ॥ 10 ॥

वृ-पार इति पूर्वरूपं सकारो व्यवधीयते पर्वते।

व्या- पारेति पूर्वरूपं पर्वते अर्थे कृञ् धातु प्रत्यये सकारो व्यवधीयते।

उदा- पारस्करः पर्वतः। पारकरोऽन्यः।

सू.अ- पर्वत संज्ञक पद में पाद के बाद कृ धातुज रूप हो तो सकार का व्यवधान होता है।

विशेषः- अत्र पर्वत अर्थवाचित्वात् पूर्ववर्तीनः पारः पश्चात् कृ धातुज रूपत्वात् सकारस्य व्यवधानं जातम्।

तु.सू- पारस्कर प्रभृतीनि च संज्ञायाम् (पा.सू,6.1.157)

इति पञ्चमो दशकः

**0-----ॐ-----0**

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठः दशकः

## 195. अप रथे ॥1॥

वृ- अप इति पूर्वरूपं सकारो व्यवधीयते रथे।
व्या- अपेति पूर्वरूपं रथे अर्थे सकारो व्यवधीयते।
उदा- अपस्करो नाम रथः। अपरथोऽन्यत्र। अपकरोन्यः।

सू.अ - रथ संज्ञक पद में अप के बाद कृ धातुज रूप हो तो सकार का व्यवधान हो जाता है।
विशेषः- तु.सू- अपस्करो रथाङ्ग (पा.सू,6.1.149)

## 196. किरतावध्यात्मम् ॥2॥

वृ-किरतौ धातौ प्रत्यये सकारो व्यवधीयते अध्यात्मम्।
व्या- अध्यात्मार्थे किरतौ धातौ प्रत्यये सकारो व्यवधीयते। अपस्किरते अविमजश्चर्षभश्च। कस्मादध्यात्मम् ? अपकरोऽन्यः।
उदा- अपस्किरते अजमृषभं च। अन्यत्र अपकिरते।

सू.अ - स्वयं परक पद में अप के बाद लवनार्थक कृ धातु का रूप हो तो सकार का व्यवधान होता है।

विशेषः- अत्र अध्यात्म अर्थः अपेक्षितः। अत एव अपः परं लवनार्थक किरत रूपत्वात् सकारस्य व्यवधानं जातम्। अध्यात्मकार्थ विवक्षा विना अयकरः रूप एव सिद्ध्यति।
तु.सू- अपाच्चतुष्पाच्छकुनिष्वालेखने (पा.सू,6.1.142)

## 197. उपप्रतिहिंसायाम् ॥3॥

वृ-उप प्रति इति पूर्वरूपे सकारो व्यवधीयते हिंसायाम्।
व्या- उपप्रतीति पूर्वरूपं हिंसार्थे किरतौ धातौ प्रत्यये सकारो व्यवधीयते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदा- उपस्किरस्व पांसुमुष्टिना, उप किरस्व पांसु मुष्टिना, प्रतिस्किरस्व भस्ममुष्टिना, प्रति किरस्व भस्म मुष्टिना। हिंसायाम् किम्? उपकिर गवाम्। प्रतिकिर परिरवाम्।

सू.अ - हिंसार्थक पद में उप तथा प्रति के बाद लवनार्थक कृ धातु का रूप हो तो सकार का व्यवधान होता है।

विशेषः- तु.सू- किरतौ लवने (पा.सू,6.1.140)। हिसायां प्रतेश्च (पा.सू,6.1.141)।

## 198. विशकुनौ ॥ 4 ॥

वृ-वीति पूर्वरूपं सकारो व्यवधीयते शकुनौ।

व्या- वीति पूर्वरूपं शकुनार्थे सकारो व्यवधीयते।
उदा- विष्किरा नाम शकुनिः। विकिर इत्यन्यत्र।

सू.अ - शकुनि वाची पद में वि के अनन्तर लवनार्थक कृ धातु का रूप हो तो सकार का व्यवधान होता है।

विशेषः -विकिर शब्दाभिधेयो वा शकुनिर्भवति। सर्वे शकुनयो भक्ष्या विष्किराकुक्कुटापते। विष्करो वा शकुनाविति...(पा.सू,6,1,50 काशिकावृत्तिः) तु.सू- विष्किरः शकुनिर्विकिरो वा (पा.सू,6.1.150)

## 199. कुस्तुबुरुजातिः ॥ 5 ॥

वृ- जातिरिति।
व्या - जात्यर्थे सकारो व्यवधीयते। कुस्तुबुरुजातिरित्यत्र। अन्यत्र कुतुंबुरुः।
सू.अ- जाति संज्ञक कुस्तुम्बुरु पद में सकार का व्यवधान निपातित है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विशेषः- कुस्तुम्बुरु नाम ओषधिर्जातिः। धान्यकम्। तत्फलानि कुस्तुम्बुरुणि। कुत्सितानि तुम्बुरुणि कुतुम्बुरुणि। तुम्बुरु शब्देनात्र तिन्दुकीफलान्युच्यन्ते । समासेन तेषां कुत्सां। (पा.सू,6.1.143 काशिकावृत्तिः)

तु.सू- कुस्तुम्बुरुणि जातिः (पा.सू,6.1.143)

**200. आस्पदमास्थायाम् ॥ 6 ॥**

वृ-आस्पदमिति सकारो व्यवधीयते आस्थायाम्। आस्पदं लब्ध्वा गावो ब्राह्मणश्च।

व्या-आस्थार्थे सकारो व्यवधीयते आस्पदमित्यत्र। आस्थायां किम् ? कृच्छ्रमापदमापन्ना ब्रह्मद्धिषः।

सू.अ - आस्था के अर्थ में आस्पद पद में सकार का व्यवधान होता है।

विशेषः- तु.सू- आस्पदं प्रतिष्ठायाम् (पा.सू-6.1.146)

**201. अपरस्परं सातत्ये ॥ 7 ॥**

वृ- अपरस्परमिति सकारो व्यवधीयते सातत्ये।

व्या- अपरस्परं इत्यत्र सातत्यार्थे सकारो व्यवधीयते।

उदा - अपरस्परं धावन्ति भुञ्जते शेरते च। सातत्ये कस्मात् ? अपरपरं ब्रूहि।

सू.अ -सातत्य द्योतक अपरस्पर पद में सकार का व्यवधान होता है।

विशेषः- तु.सू- अपरस्पराः क्रिया सातत्ये (पा.सू,6.1.144)

उपर्युक्त उदाहरणेन क्रिया त्रयाणां नैरन्तर्य वर्तते। अत एव अपरस्पर शब्दे सकारस्य व्यवधानं जातम्। नैरन्तर्यार्थ विना सकारस्य व्यवधानं न भवति। यथा अपरपरं ब्रूहि।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 202. प्रस्कण्व ऋषिः ॥ 8 ॥

वृ-प्र इति सकारो व्यवधीयते कण्व ऋषौ। प्रस्कण्वोऽन्यः।

व्या- प्र इति पूर्वरूपं कण्वऋषौ प्रत्यये सकरो व्यवधीयते ।
उदा- स्कण्वऋषिः ॥
सू.अ- ऋषि संज्ञक कण्व पद के पूर्व प्र हो तो सकार का व्यवधान होता है।
विशेषः-तु.सू- सुट् कात् पूर्वः (पा.सू,6.1.135)

## 203. गोष्पदं उदकमाने ॥ 9 ॥

वृ-गोष्पदमिति सकारो व्यवधीयते उदकमाने।

व्या- गो पदमित्यत्र उदकमानार्थे सकारो व्यवधीयते।
उदा- गोष्पदोदकः केदारः। गोपदमन्यत्र।

सू.अ - उदक के परिमाणवाची गो पद शब्द में सकार का व्यवधान होता है।
विशेषः- तु.सू- गोष्पदं सेवितासेवितप्रमाणेषु (पा.सू,6.1.145)

## 204. अगोष्पदमनाचरिते ॥ 10 ॥

वृ - अगोष्पदमिति सकारो व्यवधीयते अनाचरिते।
व्या - अगोपदमित्यत्र सकारो व्यवधीयते अनाचरितार्थे ।
उदा - अगोष्पदमयं ब्राह्मणः पानागारं सेवते। अगोपदमन्यत्।

सू.अ - अनाचरित अर्थ मे अगोष्पद शब्द में भी सकार का व्यवधान होता है।

इति षष्ठो दशकः

0-----ॐ-----0

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमो दशकः

### 205. आश्चर्यमनित्ये ॥ 1 ॥

वृ- आश्चर्यमिति सकारो व्यवधीयत अनित्ये चेत्। आश्चर्यं यदयं दद्यात्। सर्वत्रैव अनित्यम्। आचार्यं ब्रूहीति।

व्या - आ चर्यमित्यत्र सकारो व्यवधीयते अनित्ये चेत्।
आश्चर्यपदे दद्यात्। प्रथमं सकारः ततः सस्य परसवर्णत्वम्।

सू.अ - आश्चर्य वाचक अनित्य पद में सकार व्यवधान होता है।

### 206. आस्क्रा आस्क्रभोः विस्फुलिङ्गाः ॥ 2 ॥

वृ - आस्क्रा पचत वाहसः इत्याम्नायः।
उदा - आस्क्रभ इव, आस्क्रन्द इव अस्मद् भयेन विस्फुलिङ्गाः।

सू.अ - आस्क्रा, आस्क्रभ तथा विस्फुलिङ्ग पदों में सकार का व्यवधान होता है।

### 207. समासऋक्षु चन्द्रे ॥ 3 ॥

वृ-समासे स शब्दो व्यवधीयते ऋक्षु चन्द्रे प्रत्यये।
व्या - समासपदे ऋक्षु आर्चिकेषु चन्द्रे प्रत्यये सकारो व्यवधीयते।

उदा - हरि -चन्द्रः। हरिश्चन्द्रः (1311)। पुरु- चन्द्रः। पुरुश्चन्द्रः धूमकेतुः (1664) । सुश्चन्द्र दस्म विश्पते (1023)। समासे इति किम्? वयसा सचते सदा चन्द्रैर्याति (277) ऋक्षु कि ? सुचन्द्रा पौर्णमासी ।

सू.अ- समस्त पद में चन्द्र शब्द बाद में हो तो ऋचा में सकार का व्यवधान होता है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

विशेषः- तु,सू- पुरु पुथ्वधि पूर्वेषु शकार उपजायते। ह्रस्वे च पूर्वपद्यान्ते चन्द्रशब्दे परेऽन्तरा (ऋ.प्रा,4.84)। चन्द्रे तु शकारेण (वा.प्रा,3.54)। ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे (पा.सू,6.1.151)

## 208. कास्तीराजः तुन्देनगरे ॥ 4 ॥

वृ-कास्तीराजस्तुन्दे नाम नगरे। कस्मान्नगरे? कातीरगामिन्य-जतुन्दिनी।
व्या -का ती राजः इत्यत्र तुन्दनाम नगरार्थे सकारो व्यवधीयते। कास्तीराजः।
सू.अ-नगरसंज्ञक कास्तीर और अजस्तुन्द शब्द में सकार का व्यवधान होता है।

## 209. नदीरथस्या ॥ 5 ॥

वृ-नदी रथस्या नाम। कस्मात्? नदी रथया।
व्या-रथस्या इत्यत्र सकारः नद्यर्थे व्यवधीयते। रथस्या नाम नदी।

सू.अ - नदी संज्ञक रथस्या पद में सकार का व्यवधान होता है।

## 210. मस्करो वेणुः ॥ 6 ॥

वृ-वेण्वर्थे मस्करः। मस्करः वेणुः। मकारोऽन्यः।
सू.अ- वेणु संज्ञक मस्कर पद में सकार का व्यवधान होता है।
विशेषः- तु.सू- मस्करमस्करिणौ वेणुपरिव्राजकयोः (पा.सू,6.1.154)

## 211. तस्करस्तेनः ॥ 7 ॥

वृ-स्तेनार्थे तस्करः। तस्करः स्तेनः। तकरोऽन्यः।

सू.अ - स्तेनार्थक तस्कर पद में सकार का व्यवधान होता है।
विशेषः- तु.सू- तस्करः तस्करो भवति (नि.3.3) तद् बृहतौ करपत्योस्तलोपश्च (वा.प्रा,3.52)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(दीर्घीभावः)

## 212. दीर्घं भाषायां प्रापवृणोतौ संवरणे ॥8॥

वृ-दीर्घमापद्यते भाषायां प्र अप इत्येतौ शब्दौ धातौ वृणोतौ प्रत्यये संवरणे।

व्या-उक्तं सकारव्यवधानम्। इदानीं दीर्घीभाव उपदिश्यते। प्र अप इत्येतौ उपसर्गौ संवरणार्थे भाषायां वृणोतौ धातौ प्रत्यये दीर्घं आपद्येते।

उदा- प्र वृणुते । प्रावृणुते। अप वृणुते । अपावृणुते। संवरणे इति किम्? ऋत्विजं प्रवृणुते। ऋत्विजं अपवृणुते।

सू.अ - भाषा में प्र और अप के बाद संवरणाक वृ धातु का रूप हो तो प्र और अप का अन्तिम अक्षर दीर्घ हो जाता है।

विशेषः- तु.सू- पर्यभ्यपापीति वृतावृवर्णे (ऋ.प्रा,9.6)

## 213. अच्छ वदतौ ॥9॥

वृ-अच्छ इत्यस्यान्तो दीर्घी भवति वदतौ प्रत्यये।

उदा- अच्छ वदति । अच्छावदति। अच्छ वदिष्यति । अच्छावदिष्यति। सम्प्रति च कृते चैवम् । वदतौ इति किम्? आगच्छोऽच्छ गमिष्यतीति।

सू.अ - वद् धातुज रूप बाद में होने पर अच्छ पद का अन्तिम अक्षर दीर्घ हो जाता है।

विशेषः- तु.सू- सुता याहीत्यतोऽन्येषु पदेष्वच्छेति विग्रहे (ऋ.प्रा,7.6) एवाच्छ चकृमाथ (वा.प्रा,3.125)

## 214. समासे गिरौ पेषुणगोपवत्सक यवाञ्जनभञ्जनानाम् ॥10॥

वृ-समासे गिरौ प्रत्यये एतेषामन्तो दीर्घी भवति।

व्या-समासपदे पूर्वोक्तानां पदानां गिरौ प्रत्यये दीर्घीभावः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदा- पेषुण-गिरिः। पेषुणागिरिः। गोप-गिरिः। गोपागिरिः। वत्सक-गिरिः। वत्सकागिरिः। यव-गिरिः। यवागिरिः। अञ्जन-गिरिः। अञ्जनागिरिः। भञ्जन-गिरिः। भञ्जनागिरिः।

सू.अ - समास में गिरि शब्द बाद में हो तो पेषुण, गोप , वत्सक, यव, अ़ञ्जन, भञ्जन पदों का अन्तिम अक्षर दीर्घ हो जाता है।

विशेषः- वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् (पा.सू, 6.3.117)

इति सप्तमो दशकः

इति चतुर्थः प्रपाठकः

ॐ-----0-----ॐ-----0-----ॐ



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ पञ्चमः प्रपाठकः

### 215. कर्णस्य श्रृङ्गे ॥ 1 ॥

वृ-कर्णेत्यस्यान्तो दीर्घो भवति श्रृङ्गे प्रत्यये। कर्णाश्रृङ्गे बद्धाः।
उदा - कर्ण श्रृङ्गे । कर्णाश्रृङ्गे।
सू.अ- श्रृङ्ग पद बाद में हो तो कर्ण का अन्तिम अक्षर दीर्घ हो जाता है।

### 216. वृषस्य कपि मोदिनीदर्भरवेषु ॥ 2 ॥

वृ-वृषेत्यस्य अन्तो दीर्घो भवति कपि, मोदिनी दर्भरवेषु प्रत्ययेषु।
उदा- वृष कपिः।वृषाकपिः (ऋ.वे 10.86.1), वृष मोदिनी वृषामोदिनी । वृष-दर्भः। वृषादर्भः। वृष रवः- वृषारवः (ऋ.वे. 10.146.2)।

सू.अ - कपि, मोदिनी, दर्भ और रव पद बाद में हो तो वृष पद का अन्तिम अक्षर दीर्घ होता है।

### 217. कर्णे प्लीहाङ्कुशकुण्डलोपरिष्टाध्यक्षतबाणानाम् ॥ 3 ॥

वृ-कर्णे च प्रत्यये एतेषां अन्तो दीर्घो भवति।
उदा- प्लीह कर्णी । प्लीहाकर्णी। अङ्कुश कर्णी। अङ्कुशाकर्णी । कुण्डल कर्णी । कुण्डलाकर्णी । उपरिष्ट कर्णी। उपरिष्टाकर्णी । अधि कर्णी । अधीकर्णी । अक्षत कर्णी। अक्षताकर्णी । बाण कर्णी । बाणाकर्णी।

सू.अ - कर्ण शब्द बाद में हो तो प्लीहा, अङ्कुश, कुण्डल, उपरिष्ट, अधि, अक्षत और बाण शब्द का अन्तिम अक्षर दीर्घ हो जाता है।

### 218. विश्वस्य नरवसु राट् सु ॥ 4 ॥

वृ- विश्वेत्यस्यान्तो दीर्घो भवति नर वसु राट् सु प्रत्ययेषु।
उदा- विश्व- नरः। विश्वानरः (364)। विश्व- वसुः । विश्वावसुः (ऋ.वे 10.135 .5)। विश्व - राट् । विश्वाराट् ।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - नर, वसु, राट पद बाद में हो तो विश्व पद का अन्तिम अक्षर दीर्घ हो जाता है।

विशेषः-तु.सू-सर्वत्र पूर्वपदान्ताः प्लवन्ते वसुमघयोः परयोः (ऋ.प्रा, 9.1) विश्वसहभुवपुषवसुषु (वा.प्रा,3.103) विश्वस्य वसुराटोः। नरे संज्ञायाम् (पा.सू,6.3.128,129) विश्वस्य नरवसुमित्रेषु (च.अ, 3.9)।

## 219. मित्र ऋषौ ॥ 5 ॥

वृ- मित्रे च प्रत्यये यत् प्रकृतम् ऋषौ दीर्घी भवति।

व्या-विश्वेत्यस्यान्तो मित्रे प्रत्यये ऋष्यर्थे दीर्घी भवति।

उदा- विश्व- मित्रः। विश्वामित्रः(ऋ.वे 3.53.9)। ऋषौ किम् ? विश्वमित्र एव।

सू.अ- मित्र शब्द बाद में हो तो ऋषि अर्थ में विश्व पद का अन्तिम अक्षर दीर्घ होता है।

विशेषः- तु.सू-नरहामित्रेषु च (वा.प्रा,3.103)। मित्रे चर्षौ (पा.सू, 6.3.130)।

## 220. श्ववित्पदवराहकर्णदन्तदंष्ट्रेष्वसंप्रति चेत् ॥ 6 ॥

वृ-एतेषु च प्रत्ययेषु यत्प्रकृतं श्व इत्यस्यान्तो दीर्घी भवति।

व्या - श्वशब्दस्य अन्तो दीर्घी भवति विदादिषु प्रत्ययेषु। तेषु वर्तमानकालो न चेत्।

उदा -श्व वित् - श्वावित्। वित्पदः। श्व पदः- श्वापदः। श्व पदं - श्वापदं। पदवराहः। श्व वराहः - श्वावराहः। वराहकर्णः। श्व कर्णः- श्वाकर्णः। कर्णदन्तः। श्व दन्तः - श्वादन्तः। दन्तदंष्ट्रः। श्व दंष्ट्रः। श्वादंष्ट्रः।

सू.अ - वित् , पद, वराह, कर्ण, दन्त और दंष्ट्र पद बाद में हो तो श्व पद का अन्तिम अक्षर दीर्घ हो जाता है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



विशेषः- तु.सू- शुनः पदे (च.अ,3.10)। अन्येषामपि दृश्यते (पा.सू, 6.3.137)

### 221. सर्वनाम्नो दृशि ॥ 7 ॥

वृ-सर्वनाम्नां अन्तो दीर्घो भवति दृशि प्रत्यये।
उदा -कि दृशी - कीदृशी । य दृशी - यादृशी । इ दृशी - ईदृशी । अस्म दृशी - अस्मादृशी । युष्म दृशी - युष्मादृशी । ईदृशेष्विति वा।

सू.अ - दृश बाद में हो तो सर्वनाम का अन्तिम अक्षर दीर्घ होता है।
विशेषः- तु.सू- इदङ्किमोरीश्की (पा.सू,6.3.90)

### 222. उक्षवेहति ॥ 8 ॥

वृ-उक्षेत्यस्यान्तो दीर्घो भवति वेहति प्रत्यये।
उदा- उक्ष वेहति - उक्षावेहति। वेहतीति किम् ? उक्षवेहा चैव।

सू.अ - वेहती शब्द बाद में हो तो उक्ष पद का अन्तिम अक्षर दीर्घ हो जाता है।

### 223. उप नखे ॥ 9 ॥

वृ-उपेत्यस्यान्तो दीर्घोभवति नखे प्रत्यये।

व्या- उपेत्यस्यान्तः दीर्घो भवति रोगार्थे नखे प्रत्यये।
उदा- उप नखः- उपानखो रोगः। कस्मात् रोगः ? उपनखं छिन्धीति।

सू.अ - नख शब्द बाद में हो तो उप उपसर्ग का अन्तिम अक्षर दीर्घ हो जाता है।

### 224. साङ्गे च समागमे ॥ 10 ॥

वृ-साङ्गसमागमे च प्रत्यये पूर्वपदान्तो दीर्घो भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या - साङ्गे समागमे शरीराङ्गेन सह समासे पूर्वपदस्यान्तः दीर्घी भवति।

उदा - हस्त हस्ति । हस्ताहस्ति । केश केशि। केशाकेशि। मुख मुखि। मुखामुखि दण्ड दण्डि। दण्डादण्डि इत्यादि ।

सू.अ - साङ्ग समागम सूचक समस्त पद में पूर्व पद का अन्तिम अक्षर दीर्घ हो जाता है।

विशेषः- पाणिनिना एतेषु सूत्रेषु स्पष्टरूपेण उक्तम्- पा.सू-2.2.26, 5.4.127 एवं 6.3.137

इति प्रथमो दशकः

0-----ॐ-----0

अथ द्वितीयो दशकः

## 225. अष्ट ॥ 1 ॥

वृ-अष्टेत्यस्यान्तो दीर्घी भवति।

उदा- अष्ट पदी -अष्टापदी। अष्टापदम् (ऋ.वे 1.164.41- अष्टापदी)

1 2 3 1 2 3 2 2र 3 1 2

वाचमष्टापदीमहन्नवस्त्रक्तिमृतावृधम् (990) अष्टाशफाः पशवः (ताण्ड्ये, तल. उप.ब्रा 1.1.1)। अष्टाकपालम् (ऐ.ब्रा 1.1)। अष्टाभ्यो हिंकरोति इति च ताण्ड्ये (2.1.1)

सू.अ - अष्ट पद का अन्तिम अक्षर समस्त पद में दीर्घ होता है।

## 226. प्राक् शतात् ॥ 2 ॥

वृ-यत् प्रकृतमष्टान्तो दीर्घी भवति।

व्या- शतात् प्राक् वर्तमाने संख्यावाचक पदे प्रत्यये अष्ट इत्यस्यान्तो दीर्घी भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदा - अष्ट दश। अष्टादश। अष्ट विंशतिः। अष्टाविंशतिः। अष्ट त्रिंशत्। अष्टात्रिंशत् । अष्ट चत्वारिंशत् । अष्टाचत्वारिंशत् । प्राक्शतादिति किम्? अष्ट शतम् । अष्टशतम् । अष्टसहस्रम्। शत सहस्रयोः दीर्घीभावं एके मन्यन्ते। अष्टाशतम्, अष्टासहस्रम् इति। आभावमेके द्विशब्दस्य द्वाविंशतिः द्वात्रिंशत्।

सू.अ - सौ से कम संख्या के वाचक पद परे रहते अष्ट का अन्तिम अक्षर दीर्घ होता है।

**227. पदगोयुक्तदन्तशालीये च तीर्थे ॥ 3 ॥**

वृ-एतेषु च प्रत्ययेषु यत् प्रकृतमष्टान्तो दीर्घी भवति।
व्या - एतेषु प्रत्ययेषु अष्टान्तो दीर्घी भवति।
उदा - अष्ट पदम् । अष्टापदम्। पदगोयुक्तः। अष्ट गोयुक्तम्। अष्टागोयुक्तम् । अष्ट दन्तम्। अष्टादन्तम्। दन्तशालीयम्। अष्ट शालीयम्। अष्टाशालीयं च तीर्थम्।
सू.अ- पद, गोयुक्त , दन्त, शालीय, तीर्थ अर्थक पद बाद में हो तो अष्ट पद का अन्तिम अक्षर दीर्घ होता है।

**228. नाम्नां षाडी ॥ 4 ॥**

वृ-नाम्नामन्तो दीर्घी भवति षाड् इति प्रत्यये।

व्या -नाम्नामन्तो नामवाचकत्वे तदन्तः दीर्घी भवति षाडिति प्रत्यये ।
उदा - यव षाट् । यवाषाट् । जल षाट् । जलाषाट् । तुर षाट् तुराषाट् ।
1 2 3 2 3 2उ
इन्द्रस्तुराषाण्मित्रो न (954)
सू.अ- षाट् पद बाद में हो तो संज्ञा का अन्तिम अक्षर दीर्घ हो जाता है।

**229. वने त्र्यक्षरप्रभृतीनां प्राच्यभरतसंज्ञा चेत् ॥ 5 ॥**

वृ-नाम्नामन्तो दीर्घी भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या- वने प्रत्यये असंप्रति त्र्यक्षर संयुक्तं पदं प्राच्यसंज्ञं वा भरतसंज्ञं वा भवेच्चेत्, तत्र त्र्यक्षरपदस्यान्तो दीर्घी भवति।

उदा - औलुप वनं। औलुपावनम्। मिश्रक वनं। मिश्रकावनम्। रेहक वनम्। रेहकावनम्। सुन्दर वनम्। सुन्दरावनम्। कश्यप वनम्। कश्यपावनम्। त्र्यक्षर इति किम्? आम्रवणम्। शरवणम्। इक्षुवनम्। शीतवनम्। असम्प्रतीति किम्? न्यग्रोधवनम्। पनसवनम्। प्राच्यभरतसंज्ञा किमिति चेत्? चित्ररथवनम्। शतशारववनम्। कटाहपतनीय कपिलोलान्तानां गुरुलघुतुल्यानामिति वाच्यम्।

सू.अ - वन पद बाद में हो तो त्र्यक्षरात्मक पद का अन्तिम दीर्घ अक्षर हो जाता है, यदि प्राच्यभरत संज्ञा अभिप्रेत हों।

## 230. उपसर्गस्य धातावेकाक्षरे नामभूते ॥ 6 ॥

वृ-उपसर्गस्यान्तो दीर्घी भवति धातावेकाक्षरे नामभूते प्रत्यये।

उदा- उप नत्। उपानत्। उप वृट्। उपावृट्। वृट्। प्रावृट्। नि वृत्। नीवृत्।

सू.अ- एकाक्षरात्मक नामभूत धातु बाद में होने पर उपसर्ग का अन्तिम अक्षर दीर्घ होता है।

## 231. द्व्यक्षरे गुर्वादावकाराङ्गे ॥ 7 ॥

वृ - द्व्यक्षरे धातौ प्रत्यये दीर्घी भवति गुर्वादावकाराङ्गे।

व्या- गुर्वादावकाराङ्गे द्व्यक्षरे धातौ प्रत्यये असंप्रति चेत् उपसर्गान्तः दीर्घी भवति।

उदा - नि वर्तः। नीवर्तः। अभि वर्तः। अभीवर्तः। परि वर्तः। परीवर्तः। परि वारः। परीवारः। परि वापः। परीवापः। प्र कारः। प्राकारः। उपसर्गान्त इति किम्? घोषवाहः। माषवाहः। तिलवाहः। धाताविति किम्? सुशालः। विशालः। उपशालः। द्व्यक्षरे इति किम्?

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



परिहारकः। परिचारकः । गुर्वादाविति किम् ? प्रचरः। प्रतरः। प्रकरः। अकाराङ्गं इति किम् ? विहारी । विशाली । विनाशी । असंप्रतीति किम् ? उपकर्षः, प्रतिकर्षः, अपकर्षः।

सू.अ - उपसर्ग का अन्तिम अक्षर दीर्घ हो जाता है यदि उसके बाद गुरु अकाराङ्ग वाली द्व्यक्षरात्मक वह धातु हो।

## 232. प्र दन्त्यादौ सादसूदसङ्गसेनेषु ॥ 8 ॥

वृ-एतेषु च प्रत्ययेषु यत् प्रकृतं प्रेत्यस्यान्तो दीर्घी भवति।
व्या-एतेषु प्रत्ययेषु प्र इत्यस्य अन्तो दीर्घी भवति।

उदा - प्र सादः। प्रासादः। प्र सूदः। प्रासूदः । प्रसङ्गः। प्रासङ्गः। प्र सेनः। प्रासेनः। सदित्यादौ किम् ? प्रदीपप्रसेकप्रदानप्रवाहाः। अत्र दन्त्यादाविति विशेषणं न व्यावर्तकम्। किन्तु स्वरूपकथनपरमिति।

सू.अ- दन्त्य प्रथमवर्ण से युक्त साद, सूद, सङ्ग और सेन पद बाद में हो तो प्र का अन्तिम अक्षर दीर्घ हो जाता है।

## 233. न सत्वभावे लुडिते च ॥ 9 ॥

वृ-न सत्वभावे लुडिते च दीर्घी भवति।
व्या- अपवादसूत्रमिदम्। सत्वभावे लुडिते सति सादे प्रत्यये दीर्घी भाव प्रतिषेधः।
उदा - प्रासादो देवतानां, प्रासादो गुरूणां, प्रसादः सुरायाः, प्रसादो मृत्तिकायाः।
सू.अ- व्यवाची षष्ठ्यन्त पद बाद में रहने पर दीर्घ नहीं होता है।

## 234. निष्ठायामित्यादौ ॥ 10 ॥

वृ-निष्ठायामिकारो दीर्घी भवति तकारादौ धातौ प्रत्यये।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या -निष्ठायां तकारादौ धातौ प्रत्यये इकारः दीर्घी भवति। डु दाञ् दाने इति धातुः। निष्ठा प्रत्ययः, नि द् त् , बहुलं छन्दसि इति दकारस्य तकारः। अनन्तरं सुप् नित्तः टाप नित्ता अनेन सूत्रेण नि इ यस्य दीर्घीभावः नीत्ता रक्षणार्थं दत्तेत्यर्थः।

उदा - नीत्ता । वीत्ता। पीत्ता, परीत्ता। निष्ठायामिति किम्? निदीयते, परिदीयते, विदीयते।

सू.अ - निष्ठा प्रत्यय के विषय में तकारादि धातु बाद में होने पर उपसर्ग का इकार दीर्घ हो जाता है।

**235. उ च काशे दर्शने ॥ 11 ॥**

वृ - उ इ कारस्य दीर्घी भवति काशे दर्शने प्रत्यये।

व्या - उकारः इकारश्च दीर्घी भवति। दर्शनार्थे काशे काशधातौ प्रत्यये।

उदा - अवनु काशते। अवनूकाशते। प्रति काशते। प्रतीकाशते रात्र्यामेतत्। दर्शने कस्मात्? प्रतिकाशान् गच्छानुकाशानिति वा।

सू.अ - दर्शनार्थक काश् धातु बाद में होने पर पूर्ववर्ती उकार और इकार दीर्घ हो जाते हैं।

इति द्वितीयो दशकः

0-----ॐ-----0

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीयो दशकः

## 236. युग्मं घु ॥ 1 ॥

वृ-युग्मं लघु दीर्घी भवति। पादस्येत्यधिकारः।

व्या-युग्मं लघु। द्व्यक्षरपदस्य लघ्वक्षर दीर्घी भवति।

उदा- एव-हि- असि । एवा ह्यसि (232)त्रिरेतस्याम्। एवा ह्येव (650)। एवा हि वीरः (385)। सिमायाम् ( विदा मघवन्,महानाम्नी - 641) पुरीषपदेषु (एवा हि,महानाम्नी 643)। अर्च- देवाय। अर्चा देवाय (88)। योज-नु- इ । योजा न्विन्द्र (415)। बोधा स्तो (1531)। येना न वग्वा (939)। तेना पवस्वान्धसा (470)। अधा ह्यग्ने (1778)। अधा स्म (1220)। रक्षा णः (24)। शिक्षाणः (1644)। युङ्क्ष्वा हि (25)। वेत्था हि (396)। पिबा सु पूर्णम् (124), पिबा सुतस्य (239)। पिबासोमं (229), भवा नः सधमाद्ये (260) रास्वा च नः (43)। मत्स्वा न इन्द्र (239)। तिष्ठा देवः (57)। अच्छा नप्त्रे (21)। अच्छा वीरम् (56)। अच्छा कोशम् (514)। अच्छा बर्हीं रशनाभिः (523)। देवम् अच्छा (563)। तृम्प- वि- अश्नुहि (161)। हता मखम् (553)। युग्ममिति किम्? मघवं छग्धि (274)। वचः- देवाय- शस्यते । देवाय शस्यते (224)। लघ्विति किम्? पञ्च क्षितीनां पञ्चक्षितीनां (262) प्रभृतीनाम्। अत्र क्षि इति संयोगपरत्वात् च शब्दस्य गुरुत्वम्। नित्यसंयोगे वाभीष्ट्या ग्रहणम्।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - पाद के द्व्यक्षरात्मक पद का अन्तिम लघु अक्षर दीर्घ हो जाता है।

## 237. उ घोर्घुनि घोषादिः ॥ 2 ॥

वृ-उकारस्य द्वैधं घोषादिरेव दीर्घी भवति लघोः परो लघुनि प्रत्यये। युग्मं लघु इत्यधिकारः।

व्या- पूर्वसूत्रेण द्व्यक्षरपदे वर्तमानस्य लघ्वक्षरस्य उकारस्य दीर्घीभाव उक्तः। अस्मिन् सूत्रे घोषादेः उकारस्य दीर्घीभाव उच्यते। लघोः परः घोषादिः उकारः लघुनि परे दीर्घी भवति।

2 3 1 2र 2 3 2 3 1 2 3 2 3 2उ 3
उदा -तं-उ-शुचिम्। तमू शुचिँ शुचयः (607)। अरुषस्य नू महः (609)।
3 1 2 3 1 1 2र 3 2 1 2र 1 2 3 1 2र
पुरु चिदर्णवान् (340)। सिम- पुरु- नृषूतः। सिमा पुरू नृषूतो (279)।
3 2 3 2 3 2 1 2 3 3 2
शग्धि- उ- सु। शग्ध्यू3षु शचीपते (253)। लघोः पर इति किम्? अभि
3 3 2उ 3 3 2 3 2
सु-नः। अभी षु णः (684)। लघुनि इति किम्? पुरु- त्वा- दाशिवान्।
3 1 2 3 1 1 2र 3 2 3 2
पुरु त्वा दाशिवान् (97)। घोषादिरिति किम्? असु - रिणन् - अपः।
1 2 3 2 3 2 1 2 3 1 2
असु रिणन्नपः (466)। तवत्यं नर्यमित्यत्र। निवृत्तानि । अनु मातर
1 2
(51)। आ सीदतु (50)। समासत्वात्। असुरिणम्। घोषादिरित्यधिकारो वर्षाण्यनु उपसर्गो न।

सू.अ- घोष वर्ण से संयुक्त एवं लघु उकार के पूर्व और पश्चात् ह्रस्व वर्ण हो तो वह दीर्घ हो जाता है।

## 238. इ ॥ 3 ॥

वृ-इकारस्य द्वैधं घोषादेरेव दीर्घी भवति लघोः परो लघुनि प्रत्यये। युग्मं लघु इत्यधिकारः। आभावं पादादौ च।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या- लघोः परः घोषादिः इकारः लघुनि प्रत्यये दीर्घी भवति।

3 2 12र 3 1 2र 323 3 2 1 2र
उदा- श्रुधि- हवं ।श्रुधी हवं तिरश्चियाः(346)।तृम्प-वि-अश्नुहि- मदम्।
3 1 2 3 1 2 3 1 2 2 3 1 2 3
तृम्पा व्यश्नुही मदम् (161)। चर्षणीधृतं (374)। यदी वहन्ति (356)।
3 1 2र 3 1 2 2 3 2 3 2 3
श्रृणुही गिरः (1246)। कृणुही न इन्द्र (455)। तक्षद्यदी (537) । अधि
1 2 2 3
यदस्मिन् (539)। उपसर्गो न। लघोः पर इति किम्? आ- इन्द्र-याहि।
1 2 3 1 2 3 3 2उ 3 1
एन्द्र याहि हरिभिः (348)। लघुनि प्रत्यये इति किम्? दिवि संञ्छुक्रः
3 2 1 2र 3 1 2र
(83)। दिवि-सत्-भूमि । दिवि सद्भूम्या ददे (467)। घोषादि इति किम्
1 1 2 1 2 3 1 2 3 2 3 1 2
? वहसि- हविष्कृतः । अतन्द्रो हव्यं वहसि हविष्कृतः (46)। गौर्धयति
3 1 2 2 3 2 3
(149)। मित्रो नयति (218)। मयि वर्चः (602)। गुरुप्रत्ययत्वात् दीर्घी
भावो न।

सू.अ - घोषवर्ण से संयुक्त एवं लघु इकार के पूर्व और परे ह्रस्व वर्ण हो तो वह दीर्घ हो जाता है।

## 239. सोष्मिदन्त्येक्षे ॥ 4 ॥

वृ-सोष्मीकारो दन्त्येऽक्षरे पदे प्रत्यये दीर्घी भवति।

व्या- पूर्वसूत्रेण इकाररस्य दीर्घीभाव उक्तः। अनेन सोष्मीकारस्थस्य इकारस्य दीर्घीभाव उपदिश्यते। वर्गद्वितीय चतुर्थानां वर्णानां सोष्मीति संज्ञा। (ऋ.वे.प्रा) सोष्मीकारः दन्त्ये अक्षरे पदे प्रत्यये दीर्घी भवति।

2 3 2 3 2 1 3 2 3 3 1 2 3 2
उदा- विद्धि-तु- अस्य। विद्धी त्वाऽ3स्य (132) कृधि-नः। कृधी नो यश
3 1 2 3 2 3 2उ 3 2र 3 3 1 1
सो जने (479)। अभीषतः (309)। अभी षु णः (684)। अभी नो वा

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(549)। अत्र अक्षर इत्यस्य ह्रस्वत्वं एकपदत्वं च विवक्षितम्। सोष्मीति
3 2 1 2र 3 1
किम् ? दिवि-सत्-भूमि। दिवि सद्भूमि (467)। अक्षर पद इति किम् ?
3 2 3 2 3 2 3 1 2र 3 2 3 2 3 1 2
अभि-देवान् । अभि देवाँ इयक्षते (651)। अभि देवाँ अयास्यः (509)।
3 1 2र 3 2 3 2 3 1 2 3
अभि सोमासः (518)। दन्त्ये इति किम्? अभि-वः-वीरम् । अभि वो वी
1 2र 3 3 2 उ
रमन्धसः (265)। अभि त्यम् (376)। नित्यसंयोगे।

सू.अ- सोष्मन् से संयुक्त इकार के बाद दन्त्य पद हो तो इकार दीर्घ हो जाता है।

**240. कण्ठ्ये ॥ 5 ॥**

वृ-कण्ठिनि दन्त्ये दीर्घी भवति।

व्या-सोष्मीकारः, इकारः, दन्त्ये इत्यनुवर्तते। सोष्मि इकारः कण्ठिनि कण्ठ्यपरक दन्त्ये प्रत्यये दीर्घी भवति। एकाक्षरपदप्रत्ययाभावेऽपि दीर्घीभावः।

3 2 3 2 3 2 3 2 उ 3 2 3 1 2
उदा- अभि-सतः- तत् । अभीषतस्तदा भर (309)। अभीष्याम (336)।
3 1 2
अभी नवन्ते (550)। अत्र सकाररूपदन्त्यः अकाररूपकण्ठ्यपरकः।
3 2 3 2 1 2 3 1 2र
दन्त्य इति किम्? अभि- वत्सं- न । अभिवत्सं न स्वसरेषु (236,685)।
3 1 2 3 1
कण्ठ्ये इति किम् ? अभि त्रिपृष्ठम् (528)।

सू.अ - सोष्मन् से संयुक्त इकार के पूर्वकण्ठ्य वर्ण हो और उसके बाद दन्त्य वर्ण हो तो वह दीर्घ हो जाता है।

**241. व्यादेः ॥ 6 ॥**

वृ-तालव्यादेरक्षरस्य दन्त्ये प्रत्यये द्वैधं कण्ठ्ये च दीर्घी भवति। अक्षरे वा पदे प्रत्यये।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या-युग्मं लघ्विति सूत्रेण दीर्घत्वं प्राप्तस्य तालव्यादेः अक्षरस्य अनेन विशेषोपदेशः क्रियते। कण्ठ्यपरे दन्त्ये प्रत्यये इत्यनुवर्तते। तालव्यादेरक्षरस्य कण्ठ्यपरे दन्त्ये प्रत्यये एव दीर्घीभावः। एवकारोऽन्यत्र प्रतिषेधार्थः।

1 2र 1 2र 1 2र 2 3 2 3 1 2 1 2र 3
उदा- अच्छ-नप्त्रे-सहस्वते । अच्छा नप्त्रे सहस्वते (21)। योज-नु-इन्द्र।
3क 2 र 2 3 1 2 3
योजान्विन्द्र (415)। कण्ठ्यपरे इति किम् ? अच्छसुताः। इन्द्रमच्छ सु
2 3 1 2 3 1 2 1 2 3 1 2
ता इमे (566)। दश धीरस्य (538)। दिवं यय दि (348)। अर्चादेः परत्वात् समाने वा।

सू.अ - संयुक्त तालव्य वर्ण के बाद दन्त्य वर्ण अथवा कण्ठ्य वर्ण परे रहते वह दीर्घ हो जाता है।

## 242. क्षमवि ॥ 7॥

वृ - अक्षरस्य पदस्य द्वैधमक्षरे वा परे प्रत्यये दीर्घी भवति अवकारे।

व्या-एकाक्षरपरस्य दीर्घीभाव उपदिश्यते। सोष्मिदन्त्येक्षे सूत्रात् एकाक्षरे, पदे प्रत्यये इत्यनुवर्तते। अवि वकाररहिते एकाक्षरे प्रत्यये अपादान्ते पदे एकाक्षरपदस्य दीर्घीभावः।

3 1 2 3 2 3 1 2र 3 1 2 3 1 2 2 3
उदा- युयोतना नः (397)। परः-उ-ते-एकं । पर ऊत एकम् (65)। आ-घ
3 2 3 2 3 2 3 1 2 3 2 3 1 3 2 3
-ये । आ घा ये अग्निमिन्धते (133)। अद्या देवाँ (40)। सुनीथो घा
1 2 2 3 1 3 2 3
(206)। गावश्चिद् घा स (404)। सघा तम् (424)। अद्या ममार (325)।
1 2र 3 1 2 2 3 1 3 2 1 2 3 1
आ तू न इन्द्र क्षुमन्तम् (167)। एह्यू षु (7)। शग्ध्यूऽउषु (253)। पर्यूषु
2 3 2 1 2 3 2 3
(428)। त्यमूषु (332)। अवीति किम् ? त्यं उ वः । त्यमुवः सत्रासाहम्
3 2 3 3 2 3 2 3 1 2र
(170)। अपादान्ते पदे इति किम् ? तुचे-तु-नः । विदा गाधं तुचे तु नः

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



3 2 3 1 1 2 1 2
(41)। देवा यज्ञम् (56)। प्र न इन्दो (509) युग्ममित्यधिकारः। अतप्तत
3 2उ
नूर्न (565)।

सू.अ - यदि वकार बाद में न हो तो एकाक्षरात्मक पद तथा संयुक्त अक्षर दीर्घ हो जाते है।

## 243. तृतीयम् ॥ 8 ॥

वृ-तृतीयं चाक्षरे पदे प्रत्यये दीर्घी भवति।

व्या-ह्रस्वात् परं पादतृतीयं लघ्वक्षरं पदे प्रत्यये दीर्घी भवति।

1 2र 1 2 3 1 2 3 2 3 2 3 3 2 3 1 2
उदा - ईडिष्व-हि। ईडिष्वा हि प्र (103)। ऊर्ध्वः-उ-सु-नः। ऊर्ध्व ऊषुण
3 2 3 3 2 3 2उ 3 2 3 2 3 1 2 3
ऊतये (57)। इममू षु (28)। स्तुष ऊ षु (390)। वयं घा ते (230)।
1 2र 1 2र 2उ 3 1 2 3
ह्रस्वाक्षरमिति किम्? अत्र-अह-गोः । अत्राह गोरमन्वत (147.915)।
3 2 3 1 3 2 3 3 1 2 3
एतमुत्यम् (581.1081.1273)। लघ्विति किम्? अयम्-उ-ते। अयमुते
1 2 3 2 3 2
समतसि (183)। उक्थं च न (225)।

सू.अ -एकाक्षरात्मक पद परे रहते तीन अक्षर के पद का अन्तिम अक्षर दीर्घ हो जाता है।

## 244. यतौ ॥ 9 ॥

वृ-यतौ च दीर्घी भवति। तृतीयमित्यधिकारः।

व्या-पूर्वसूत्रात् तृतीयमित्यनुवर्तते। पादतृतीयौ यकारतकारौ दीर्घी भवतः।

1 2 3 2 3 1 2 3 1 2 3 2 3 1 2
उदा- यावय- दिद्युं। यावया दिद्युमेभ्यः (266)। च्यावया (298)। आ ग
3 2 3 1 2र 1 2 3 1 2 3
न्ता (401)। आ-सोत-परि । आ सोता परि षिञ्चत (580)। पर्वता

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(338)। आ त्वेता (164)। कृणोतन (395)। युयोतन (397)। सुनोत (285)। सोमं हिनोत (535)। सचेत (19)। आ धावत (123)। दानाय (1320)। भगाय (427) पादतृतीयौ इति किम्? धियं - सचेत-मर्त्यः। धियँ सचेत मर्त्यः (19)। ह्रस्वादित्यधिकारः।

सू.अ - त्र्यक्षर पद के अन्त में यदि य, त हो तो वे दीर्घ हो जाते हैं।

## 245. ष्मिणोद्विवतः ॥ 10 ॥

वृ-द्विवतः परस्य द्वैधम् ऊष्मिणोः प्रत्यययोर्दीर्घी भवति। युग्मम् (सू 236) यतौ (सू.244)इत्यधिकारः।

व्या-यतावित्यनुवर्तते। द्विवतः द्व्यक्षरात्परस्य यकारस्य तकारस्य च ऊष्मिणोः ऊष्माक्षर युक्तयोः प्रत्यययोः दीर्घी भावः।

उदा- तं-गूर्द्धय-स्वर्णरम् । तं गूर्द्धया स्वर्णरम् (109)। आ-जुहोत-हविषा । आ जुहोता हविषा मर्जयध्वम् (63)। द्रावया (308)। महता (ऋ.वे.1.32.5)। भरता (98)। अर्चता (362)। तो षिञ्चता (512) निवृत्तानि । तृतीयेन (65)। या इन्द्र (254)। अरं गमाय (352)। वियन्त्यसुराय (551)। सम्मील्ये (आ.गा 1,80 आच्छा) सोमं हिनोत (535)। अमीमदन्त (415)। असिष्यदन्त (563)। स्थविराय तक्षुः (322)। द्विवतः पर इति किम् ? रात हव्यं इडस्पते । नमसा रातहव्यम् (63)। ऊष्मिणोः इति किम् ? धावत-मद्याय। आ धावत मद्याय (123.1657) जनयत (72)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सू.अ - एक पद में दो अक्षरों के बाद य और त दीर्घ हो जाते हैं, यदि ऊष्मन् वर्ण बाद में हों।

इति तृतीयो दशकः

0-----ॐ-----0

अथ चतुर्थो दशकः

## 246. णि ॥ 1 ॥

वृ-णकारिणि पादे दीर्घी भवति।

व्या -णकारिणि पादे वर्तमानः तकारः ऊष्मिणोः प्रत्यययोः दीर्घी भवति। यतौ इत्यतः त इत्यनुवर्तते।

12र 3 12र 2 3 1 2 3 1 2 3
उदा - इन्द्रम् - इत् - स्तोत- वृषणम् । इन्द्रमित्स्तोता वृषणम् (242)।
3 12र 2 3 1 2 3 2 1 2र
मदत -वस्वः । मदता वस्वो अर्णवम् (376) । उष्मिणोः किम्? आदिद्व
3 1 2
न्देत वरुणम् (288)।

सू.अ- णकारियुक्त पाद में पद का अन्तिम त दीर्घ हो जाता है।

## 247. नीचस्य खु प्रथमे ॥ 2 ॥

वृ-नीचस्य पदस्य द्व्यक्षरस्य द्वैधं वर्गप्रथमे प्रत्यये दीर्घी भवति।

व्या- खु इति द्व्यक्षरस्य संज्ञा। उच्चात्परस्य द्व्यक्षरात्परस्य नीचस्य द्व्यक्षरस्य अव्ययपदरहितस्य पदस्य वर्गप्रथमे अक्षरे प्रत्यये दीर्घीभावः।

2 2 3 1 2 3 2 3 2 3 2 3
उदा- वह -त्वम्।आ दाशुषे जातवेदो वहा त्वम् (40) व्रजे-भज-त्वं- नः।
1 2र 3 1 2 3 1 2 3 2 3 1 2र 3 1 2 3
आ गोमति व्रजे भजा त्वन्नः (318)।पूर्ण - इन्द्र - चिकेतति। पूर्णमिन्द्रा
1 2 3 12र 3 1 2 3
चिकेतति (424)। उच्चात्परस्य इति किम् ? इन्द्रम् - अर्च । इन्द्रमर्च

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



3 2 1 2 3 1
(235.811)। द्व्यक्षरात्परस्य इति किम् ? आ- वह- तान्। त्वमादित्याँ
2र 3 1 2 3 3
आ वहतान् (1066 ) जराबोध (15), वज्रहस्त (586)। अव्ययपद
3 2 3 2 3 1 2 3 2 3 2
रहितस्य इति किम्? यह्वाः - इव- प्र । यह्वा इव प्र वयाम् (73)।
2 3क 2 र 3क2र
वर्गप्रथमे प्रत्यये इति किम् ? नि उब्ज- वीर्यम् । बलं न्युब्ज वीर्यम्
2 3 1 2 3 1
(95)। इन्द्रमित्स्तोता (242), आ तू (167.181)। 246 सूत्रेण दीर्घत्वम्।

सू.अ- सर्वानुदात्त द्व्यक्षरपद के बाद वर्ग का प्रथमवर्ण हो तो पूर्ववर्ती पद का अन्तिम अक्षर दीर्घ हो जाता है।

## 248. मः ॥ 3 ॥

वृ-मशब्दो दीर्घी भवति।

व्या- लघुमध्यः मशब्दः दीर्घी भवति।

1 2र 3 2 1 2 3 1 2र 1 2र 3 3 2 3
उदा- सिम - पुरु । सिमा पुरू नृषूतो (279)। जनिम- विवक्ति । देवो दे
2 3 1 2 2 3 1 2 3 2उ 3
वानाञ्जनिमा विवक्ति (524)। सुषुम - हि - ते । आ याहि सुषुमा हि ते
3 1 2 3 1 2 3 2 3
(191)। लघुमध्य इति किम्? शकेमत्वा । शकेमत्वा समिधँ साधया
2 3 1 2 3
धियः (1066)। ब्रह्म जज्ञादीनि (321.101.960)

सू.अ - मकार दीर्घ हो जाता है।

## 249. तम् ॥ 4 ॥

वृ - तं लिङ्गायां चर्चि मशब्दो दीर्घी भवति।

व्या - तं लिङ्गायां तं इति शब्दयुक्तायां ऋचि वर्तमानस्य मकारस्य दीर्घीभाव उपदिश्यते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदा - ररिम - ते । अनाभयिन् ररिमा ते (124) । अत्र तल्लिङ्गः वर्तते -सुतम्- अन्धः इत्यत्र (124) । सह्याम - त्वोताः । तना त्मना सह्यामात्वोताः (316) । अत्र तल्लिङ्गः -सुवितं यस्य कोना (316)एवं- विद्मा (317) जगृह्मा (317) इत्यादिः । तल्लिङ्गायां किम्? वनेम - तत् । त्वा युजा वनेम तत् (128)। सोम सुवीर्य्यम् (501), धाम वि राजति (632), नीचस्य निवृत्तिः। निवृत्तानि । ब्रह्म जज्ञानम् (321), ब्रह्म चकार (410), तमु हुवे (748), साम गायत (388), धाम गोनाम् (534), नाम गोनाम् (679)

सू.अ - ऋचा में तद् का कोई रूप बाद में हो तो म दीर्घ हो जाता है।

## 250. इमम् ॥ 5 ॥

वृ - इमं लिङ्गायां चर्चि मशब्दो दीर्घी भवति।

व्या - इमं स्तोमायां ऋचि मशब्दः दीर्घी भवति।

उदा - सम्- महेम - मनीषया । सम्महेमा मनीषया । मा - रिषाम - वयं। मा रिषामा वयं तव, द्विरिमं स्तोमायाम् (66), सोमपर्वभिः (180)। इमं स्तोमायामिति किम्? शकेम- त्वा । शकेम त्वा (1066)।

सू.अ - ऋचा में इमम् पद हो तो म दीर्घ हो जाता है।

## 251. तेः ॥ 6 ॥

वृ - तेः परं च वर्गप्रथमे प्रत्यये दीर्घी भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या - तेः परं अक्षरं वर्गप्रथमे प्रत्यये दीर्घी भवति। नीचस्य खु प्रथमे सूत्रात् प्रथमे इत्यनुवर्तते।

1 2र 3 1 2 3 1 2
उदा - तेन - पवस्व । तेना पवस्वान्धसा (470)। वर्गप्रथम इति किम् ?
1 2र 3 2 1 2 3 1 2र 1 2र 3 2 1 2 3 1 2
तेन - नूनं । तेन नूनं मदे मदेः(116)। तेन-मा-सम् । तेन मा सँ सृजामसि (624)।

सू.अ- वर्ग का प्रथम अक्षर बाद में हो तो ते युक्त पद का अन्तिम अक्षर दीर्घ हो जाता है।

## 252. अञुंस्त्य ॥ 7 ॥

वृ - पादान्तस्य द्वैधं स्त्यपदमेव दीर्घी भवति।

व्या - पादान्तस्य अञु इति संज्ञा। पादान्तस्य स्त्य शब्दस्यैव दीर्घीभावः।

3 1 2 3 1
उदा - सुहस्त्य समुद्रे । मृज्यमानस्सुहस्त्या समुद्रे (517) निवृत्तमन्यत्।

सू.अ - पाद के अन्त में प्रयुक्त 'स्त्य' पद का ही अन्तिम अक्षर दीर्घ होता है।

## 253. बा इ वर्त्तनिः ॥ 8 ॥

वृ - ग्रहणात् पदान्ते वर्तमानावेतावपि दीर्घी भवतः।

1 2र 3 2 2 3 2 3 1 2 3 2 3 2 1 2र 1
उदा - पिब- इमं । इन्द्र सोमं पिबा इमम् (191)। तं -वर्त्तनीः- अनु । तं
2 3 1 2र 3 2 3 2 1
वर्त्तनीरनु वावृत एक इत् (372)। अन्यत् स्वरे । निवृत्तपदान्तश्च। पिबे
2र 3
दस्य (162)। व्यञ्जनान्तम्।

सू.अ - बा इ और वर्तनीः पद का अन्तिम अक्षर दीर्घ होता है।

## 254. यमः ॥ 9 ॥

वृ - यं परस्य च पदस्य दीर्घी भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या - यं शब्दात् परस्य पदस्यान्तो अकारो लघुमध्यमः दीर्घी भवति।

3 1 2 1 2 3 2 3 1 2 3 2 3क 2 र

उदा - रातहव्यम्-सपर्यत- यजतं । सपर्यता यजतं प स्त्यानाम्(63)।

3 1 2 1 2र 3 2 3 3 2 3 1 2 3 1 2 1 2 3

स्वस्तये-तार्क्ष्यम्-इह-हुवेम । स्वस्तये तार्क्ष्यमिहा हुवेम(332 ), आ हर्य

1 3 2 3 3 1 2 3 2 3

ता (551)। लघुमध्यम इति किम् ? वयम्- इन्द्र-त्वा । वयमिन्द्र त्वायवः

1 2 3 1 2र 2 3

(132), त्वया वयं पवमानेन (590)। अकार इति किम्? हव्यम्-वहसि।

1 2 3 1 2 3 2 3

अतन्द्रो हव्यं वहसि हविष्कृतः (46)।

सू.अ - दो लघु स्वरों का मध्यवर्ती यकारपरक पद का अन्तिम अक्षर दीर्घ हो जाता है।

## 255. प्राचु सोष्मिणि ॥ 10 ॥

वृ - प्रादिन्यामृचि सोष्मिणि पदे दीर्घी भवति।

व्या - वर्गद्वितीयचतुर्थानां सोष्मीति संज्ञा इत्युक्तम्। चु इति आदेः संज्ञा। प्रादिन्यां ऋचि सोष्मिणिपदे वर्तमानः अकारः दीर्घी भवति।

2 3 2 1 2र 2 3 2उ 3 1 2 3 2 3 1 2 3

उदा - प्र- देवम्- अच्छ। प्र देवमच्छा मधुमन्त इन्दवः (563)। प्र-धन्व ।

1 2 3 1 2 3 3 2उ

प्र धन्वा सोम जागृविः (567), च ना (284.1675), प्रायासुः (1117)।

1 2 3 1 2 3 1 2 3 2उ

सोष्मिणीति किम्? प्र सोम देववीतये (514)। प्र सेनानी (533)।

सू.अ- जिनके आदि में प्र है उनके बाद अवस्थित अपदान्त सोष्म पदका वर्ण दीर्घ हो जाता है।

इति चतुर्थः खण्डः

0-----ॐ-----0

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ पञ्चमः खण्डः

(दीर्घीकरणस्य अपवादसूत्रम्)

### 256. अरस्य ॥ 1 ॥

वृ- अकारः प्रतिषेधो नेमौ दीर्घी भवतः।

व्या- इदानीं दीर्घस्य अपवादः उच्यते। अकारः प्रतिषेधार्थकः। र स्य एतौ शब्दौ न दीर्घी भवतः।

2 3 1 2 1 2 3 2 3 1 2 3 1 1 2 3 1

उदा- इन्द्र वाजेषु (598), इन्द्र सुतेषु (381) तत्र पूषा (148)। कस्य नूनं

1 2र 3 1 2 3 1 2 3 1 2 3

(34)। न तस्य मायया (104)। पूर्णमिन्द्रा चिकेतति (424) इत्यत्र

2र 3

नीचस्यखु प्रथमे(247)सूत्रात् दीर्घत्वम्। आ जभारा (599) विशेषात्तु।

सू.अ - संयुक्त र और स्य का अन्तिम अक्षर दीर्घ नहीं होता।

### 257. रसन्धिः ॥ 2 ॥

वृ - स्वरसन्धिः पदं न दीर्घी भवति।

व्या - स्वरसन्धियुक्तं पदं न दीर्घी भवति।

3 2 3 2 3 2 3 1 2र 3 2 3 2 3 3

उदा - अश्वया-उत-रथया। अश्वयोत रथया (186)। नः- आ- गहि। आ

1 2 3 1 2 3 1 2 3 1 2र 3 2 3 2 3 2र 3 2

रात्ताद्धा सधमादं न आ गहि (284) यदि -वा -इह। पुरो वा सन्यदि वेह

3 2 2 3 2 3 3 1 2

नूनम् (450)। स्वरसन्धिरिति किम्? आ- तु-आ- इत। आ त्वेता नि षी

3 1

दत (164) अत्र केवलस्वरसन्धिः न यण् सन्धिरपि वर्तते इति कृत्वा

1

दीर्घत्वम्। आ तू (167.181)

सू.अ - स्वर सन्धि प्राप्त पद का अन्तिम अक्षर दीर्घ नहीं होता।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 258. उपसर्गः ॥ 3 ॥

वृ-उपसर्गश्च न दीर्घी भवति।

व्या-प्र उप अप अय आ पर वि नि सु उत् अभि प्रति परि अपि अति अधि अनु निः दुः सं इत्येतानि पदानि उपसर्ग इति व्यवह्रीयन्ते।

3 2 323 3 2
उदा- अभीषतस्तदा भर (309) इत्यत्र 'अभि' इत्यस्य 'सोष्मि दन्त्ये क्षे' (239) इति सूत्रेण दीर्घी भाव एव, दन्त्ये एकाक्षरपदे प्रत्यये। 'चित्' 'स्वित्' 'छित्' 'इत्' 'वाक्' 'ह' 'हे' 'हि' 'हुम्' एवमादयो निपाताः।

सू.अ - उपसर्ग दीर्घ नहीं होते।

## 259. द्य ॥ 4 ॥

वृ-द्यशब्दश्च न दीर्घी भवति।

व्या- द्यशब्दः एतेषु स्थलेषु न दीर्घी भवति।

2 3 1 2र 3 1 2 3 1 2 3
उदा- यदद्य कच्च वृत्रहन् (126)। अद्य नो देवसवितः (141), अस्माकम

2 3 1 2 3 2 3 3 3 2 3 1 2 3 1
द्य मरुतस्सुते सचा (241)। एतेषु स्थलेष्विति किम् ? अद्या देवाँ उषर्बु

2 3 2 3 1 2 3 1
धः (40), अद्या ममार (325), वह्निमद्या (498)

सू.अ- द्य शब्द दीर्घ नहीं होता।

(दीर्घस्य अपवादसूत्रम्)

## 260. मि तृतीयी ॥ 5 ॥

वृ-मकारे प्रत्यये वर्गतृतीयो न दीर्घी भवति।

1 2र 3 2 3 2 1 2 3 2 3 2 3 2 1 2 र 3 2 3 2
व्या- अग्ने-मृड-महान्। अग्ने मृड महाँ असि (23)। इन्द्रः- अङ्ग- महत्।

1 2 3 2 3 2 3 2
इन्द्रो अङ्ग महद्भयम् (200) वैराजे (398.गा.4.693), सिमासु

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(महानाम्नी -3 पिब म )। मकारे इति किम्? पिब- इमम् । इन्द्र सोमं पिबा इमम् (191)। वर्गतृतीयीति किम्? हत-मखम् । हता मखन्नभृग वः (553)। बोधा सु (929)।

सू.अ -मकार बाद में हो तो वर्ग का तृतीय अक्षर दीर्घ नहीं होता।

## 261. अनुषगादिः ॥ 6 ॥

वृ- अनुषगादिः दीर्घी भवति।

व्या- इतः पूर्वं पदान्त्याक्षरस्य दीर्घीभाव उक्तः। इदानीं क्वचित्स्थले आदेः दीर्घीभाव उपदिश्यते । 'अनुषक्'इति पदस्य आदिः दीर्घी भवति।

उदा- हव्यम् - अनुषक्। आजुह्वद्धव्यमानुषक् (82)। स्तृणन्ति बर्हिरानुषक् (133)। आघाये इत्यत्र अनुषगादिरिति किम्? यदि वीरो अनु ष्याद्ग्निम् (82)।

सू.अ - अनुषक् पद का आदि अक्षर दीर्घ होता है।

## 262. अवो ह्रस्वात् ॥ 7 ॥

वृ-ह्रस्वात्परः अवादिः दीर्घी भवति।

व्या- वेनः अवरिति पदपाठः। वि सीमतस्सुरुचो वेन आवः (321)। ह्रस्वात्पर इति किम्? महित्रीणामवरस्तु (192)। ह्रस्वास्वरितमिति वा।

सू.अ- ह्रस्वस्वर से परे अवः पद का आदि अक्षर दीर्घ होता है।

## 263. पुरुषः ॥ 8 ॥

वृ-ह्रस्वात् परः पुरुषादिर्दीर्घी भवति।

व्या- ह्रस्वात् परः पुरुषशब्दादिः दीर्घी भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



1 2र 3 1 2र 3 1 2 3 1 2 3 2 3 2 3
उदा - ज्यायान् च पूरुषः । ततो ज्यायाँश्च पूरुषः (620)। विराजो अधि
1 2 3 1 2 3 3 2 3 2उ 3
पूरुषः (621)। ह्रस्वात्पर इति किम्? सहस्रशीर्षाः (617) त्रिपादूर्ध्व उदै
1 1 3
त्पुरुषः (618)।

सू.अ - ह्रस्व स्वर से परे पुरुष पद का आदि अक्षर दीर्घ हो जाता है।

## 264. द्विः स्पर्शोरेऽन्त्यः ॥ 9 ॥

वृ-ह्रस्वात् पर इत्यधिकारः। स्वरे प्रत्यये द्वैधमन्त्यस्पर्श एव द्विर्भवति।

व्या- अवोह्रस्वात् सूत्रात् ह्रस्वादित्यनुवर्तते। ह्रस्वात्परः वर्गान्त्यः पदान्तः स्पर्शः स्वरे प्रत्यये द्विर्भवति।

3 2
उदा- प्रति- अङ्- उत् । प्रत्यङ्ङुदेषिमानुषान्(636)। तदावृणादीनि
1 2र 3 2 3 1 2र 3 2
(138) अजगन्- अपः। यन्मातृरजगन्नपः (53)। भुङ्- इति भुङ्ङिति ।
1 र 2 1 2 2र 3 2
ऋश्यासइन्द्रभुङ्ङिति (आ.गा.228)। हसन्नत्र, अजगन्नपः (53), क्रीडादीनि (584-क्रीडन्नू) सुगण् - ईशः । सुगण्णीशः। इदमुदाहरणं
2 3 1 2 3 1 2र
ऋचि नास्ति। ह्रस्वात् पर इति किम्? ऋतून्-अनु । उषः प्रारन्नृतूँरनु
1 2 3 2उ
(367)। यदिन्द्र प्राक् (279) स्पर्श इति किम् ? यष्कादीनि।

सू.अ- ह्रस्व अक्षर से परे स्पर्श रूप वर्ग अन्तिम वर्ण का द्वित्व उच्चारण होता है।

## 265. अप्रतिषेधे ॥ 10 ॥

वृ- स्वरे प्रत्यये द्वैधमन्त्य एव द्विर्भवति। अप्रतिषेधे पदान्तः।
व्या- प्रतिषेधार्थे द्विर्भावः न भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदा- अन् - आनतस्य। अनानतस्य शवसः (364) । अन्-आभयिन्। अनाभयिन्नरिमाते (124)। अत्र न इत्यस्य अन् इति प्रतिषेधार्थकः। प्रतिषेधे इति क्वचित् पाठः।तम् - इन्द्रं ।तमिन्द्रं वाजयामसि ( 119)। अञ् उ- अञु ।अत्र च वर्गान्तस्य प वर्गान्तस्य च प्रतिषेधे उभयत्रापि द्विर्भावो नास्ति।

सू.अ - स्वर परे रहते संयुक्त व्यञ्जन द्वित्व को प्राप्त होता है यदि पदान्त में हो तो ।

विशेषः- तु.सू- पदान्तीयो ह्रस्वपूर्वो ङ् कारो नकारश्च क्रामत उत्तरे स्वरे (ऋ.प्रा,6.15)। संयुक्तं तु व्यञ्जनं शाकलेन (ऋ.प्रा,6.14)। ह्रस्वपूर्वो ङ कारो द्विवर्णम्। नकारश्च (तै.प्रा,9.18. 19)। ङ्नौ चेद्ध्रस्वपूर्वौ स्वरे पदान्तौ (वा.प्रा,4.10.6)। ङणनाह्रस्वोपधाः स्वरे (च.अ,3.27)।ङमो ह्रस्वादचि ङमुण्नित्यम् (पा.सू, 8.3.32)।

इति पञ्चमो दशकः

0-----ॐ-----0

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ षष्ठो दशकः

### 266. हुम् ॥ 1 ॥

वृ-हुम् शब्दस्य मकारः स्वरे प्रत्यये क्रामति।

व्या - हुं शब्दस्य मकारः स्वरे प्रत्यये क्रामति द्विर्भवति इत्यर्थः।

उदा- हुम्मायेऽ3 (साम.383)। हिम्माऽ2 (साम.413)। हुं शब्दं विना अन्यत्र मकारस्य द्विर्भावो नास्ति।तमिन्द्रम्(460),त्यमुवादीनि (170)

सू.अ - बाद में स्वर हो तो हुम् शब्द का मकार द्वित्व को प्राप्त हो जाता है।

### 267. छः ॥ 2 ॥

वृ- छश्च द्विर्भवति।

व्या - ह्रस्वात्परः इति अवोह्रस्वात् सूत्रादनुवर्तते।

उदा - अहिच्छत्रा। कर्णाच्छिद्रम्। सुच्छिन्नम्। परिच्छिन्नम्। प्र -छिन्धि। वृश्चप्रवृश्चप्रच्छिन्धि (आ.गा.83) अच्छा व इन्द्रम् (375)। ह्रस्वात्पर इति किम्? वरुणे छन्द्यं। वरूथ्ये3 वरुणे छन्द्यं वचः (255)।

सू.अ -'छ' द्वित्व को प्राप्त हो जाता है।

विशेषः- उदा - अहि- छत्रा। अहिच्छत्रा। सु -छिन्नम्। सुच्छिन्नम्।
तु.सू- असंयोगादिरपिच्छकारः (ऋ.प्रा,6.3) छे च (पा.सू,6.1.73)।

### 268. माभ्याम् ॥ 3 ॥

वृ - माशब्दाकाराभ्यां च परश्छो द्विर्भवति।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



व्या -माकार आकाराभ्यां परः छकारः द्विर्भवति। पूर्वं ह्रस्वात्परस्य द्विर्भावः उक्तः इदानीं दीर्घात्परस्य उच्यते।

उदा - मा- छदयमानम्। माच्छदयमानम्। मा- छिन्नम् । माच्छिन्नम्। मा -छिदता। माच्छिदता । अच्छादीनि। आ - छादयति। आच्छादयति। माभ्यामिति किम्? कालीछायायां शालीछाद्यते। समा छाया।

सू.अ- मा के बाद छ को द्वित्व हो जाता है।

## 269. रात्सण् ॥ 4 ॥

वृ - स्वरात् संयोगादिः क्रामति।

व्या - स्वरात् संयोगादिः द्विर्भवति।

उदा - अग्न आ याहि (1)। अभि-प्रियाणि। अभिप्प्रियाणि (554), प्र मंहिष्ठाय (107), अभि वः (235), स्वरादिति किम् ? त्वमिन्द्र (120), प्र तु द्रव (523)।

सू.अ - स्वर से परे पदादि संयुक्त व्यञ्जन द्वित्व को प्राप्त होता है।

## 270. रं ह्रात् ॥ 5 ॥

वृ - परं तत् रेफहकाराभ्यां क्रामति।

व्या - हकार रेफाभ्यां परं व्यञ्जनं द्विर्भवति।

उदा - विह्हुतम् (244), दुदुह्हिरे (560) अर्क्कमर्च्चन्तु कारवः (158)। ब्रह्म्म जज्ञानम् (321)। आजुह्व्वानस्य (465)। पूर्वसूत्रेण प्राप्तस्य रेफहकार विषये अपवादः। एतदुक्तं गौतमीयशिक्षायां

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नारदीयशिक्षायाञ्च-

सर्वेषां व्यञ्जनानां द्विर्भावो भवति द्वादशाक्षरवर्जमिति।
ते ख छ ठ थ फाः घ झ ढ ध भाः रहयोश्च॥ इति गौतमीय शिक्षा
न रेफे वाहकारेवाद्विर्भावो जायते क्वचित्।
न च वर्गद्वितीयेषु न चतुर्थे कदाचन॥
इति नारदीयशिक्षा-2.2.6

सू.अ - स्वर से परे रेफ और हकार द्वित्व को प्राप्त होते हैं।

## 271. ऊष्माव्यञ्जने ॥ 6॥

वृ - ऊष्मणोर्द्वैधं व्यञ्जने प्रत्यये द्विर्भवति।

व्या - रेफात्परस्य द्विर्भाव उक्तः। रेफात्परो वर्णः यदि ऊष्मा चेत् तत्र ऊष्मणः व्यञ्जने प्रत्यये एव द्विर्भावः। स्वरे तु नास्तीत्यर्थः।

उदा- वार्ष्यायणीपुत्रः (आ.ब्रा.2.23.19)। वाष्र्ण्योः। व्यञ्जने प्रत्यये
          1   2र          3 1 2
इति किम्? बर्हिषि । नि होता सत्सि बर्हिषि (1)। अत्र इकार परकस्य हकारस्य द्विर्भावः नास्ति। हर्षते। वर्षति। दर्शनीयो अर्हति। बर्हिः
                1 2                                   3 1 2
स्पर्शने। कार्षायणम्।अर्षा सोम(503),स्पर्शे इति किम्? कवयः (623)

सू.अ - व्यञ्जन परे रहते संयुक्त ऊष्मन् द्वित्व उच्चारण को प्राप्त हो जाता है।

(नकारस्य मूर्धन्यभावः)

## 272. दे नो मूर्धन्यम् ॥ 7॥

वृ - एकपदे रेफे नकारो मूर्धन्यमापद्यते।

व्या - दे एकपदे रेफे नकारः पदान्तः मूर्धन्यमापद्यते णकारमापद्यते।

         3 1 2      3 2उ       3 1 2              2र 3
उदा - शरणे । तोदस्येव शरण आमहस्य (97)। चरणम् (614)
  3      1 2 3 1            3 1 2                  1 2            1 2
गिरीणां । उपह्वरे गिरीणां (143) तरणिम् (204) अप्रहणम् (357) वरे

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ण्यम् (48.1462) हिरण्या (1427), हिरण्ययः (511), सुप्रपाणाः (626)। पदान्त इति किम्? नव्याँसम् (28)। पूर्विनेष्ठाम् (353)। एकपदे रेफे इति किम्? रेवतीर्नस्सधमादे (153) वारवन्तम् (17), वरो न (1387) , प्यन् वज्रिन् (302)। नकार इति किम्? उषः प्रारनृतूँरनु (367)। अत्र नकार इति व्यञ्जनमात्रं न विवक्ष्यते। अपि तु स्वरयुक्तम्। अक्षरान्त प्रतिषेधः। पूर्विनेष्ठा (353) समासत्वात्।

सू.अ - एक पद में रेफ के बाद आने वाला नकार मूर्धन्य हो जाता है।

विशेषः - उदा- गिरीनाम्- गिरीणाम्। तरनिम्- तरणिम्। अप्रहनम्- अप्रहणम् इत्यादि।

तु.सू - ऋकार रेफषकारानकारं समानपदेऽवगृह्ये नमन्ति। अन्तः पदस्थम ककार पूर्वा अपि सन्ध्याः (ऋ.प्रा,5.40)। ऋषरेभ्यो नकारो णकारं समानपदे (वा.प्रा,3.85)। ऋवर्णरेफ षकारेभ्यः समानपदे नो णः (च.अ, 3.75)। रषाभ्यां नो णः समानपदे (पा.सू,8.4.1)।

## 273. ऋषाभ्याम् ॥ 8 ॥

वृ - ऋकारषकाराभ्यां च परो नकारो मूर्धन्यमापद्यते।

व्या - एकपदे ऋकारषकाराभ्यां परः नकारश्च मूर्धन्यमापद्यते।

उदा - अपो वृणानः पवते कवीयान्(539)। सोम उष्वाणस्सोतृभिः (515), होतृणाम् (ऋ.वे 8.102.10), मातृणाम्। पितृणाम् (ऋ.वे.1.109.3) जरितृणाम् (684) मानुषाणाम् (593), अक्षेणव (339), पोषिणम् (58), क्षपमाणः (305), ईषमाणा(324), सुष्वाणासः

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(316)। एकपदे इति किम् ? अर्षा नः सोम शँ गवे(1337)। रषाभ्यां नोणः समानपद इति पाणिनि सूत्र समानार्थकः (8.4.1)।

सू.अ- एक पद में ऋकार और षकार से परे नकार मूर्धन्य हो जाता है।

**274. नो व ॥ 9 ॥**

वृ - नः शब्दश्च वलिङ्गायामृचि मूर्धन्यमापद्यते।

व्या - वलिङ्गायां ऋचि नश्शब्दः मूर्धन्यं आपद्यते। सप्तम्यन्तात्परस्य नास्ति। नोव नः व् अ इति पदच्छेदः। न कारस्य व् शब्दे प्रत्यये मूर्धन्यापत्तिः नास्ति।

उदा - स वाजेषु प्र नोविषत्(411)। इन्द्र वाजेषु नोऽव (598)। ऋषाभ्यां इति सूत्रस्य अपवादमिदं सूत्रं इति केचन वर्णयन्ति।

उदा - ऊर्ध्वः ऊ सु नः । ऊर्ध्व ऊषुण ऊतये (57)। गव्या उ सु नः । गव्यो षु णो यथा पुरा (186)। शिक्षाणो अस्मिन्पुरुहूत यामनि जीवा ज्योतिः (259)। अग्ने रक्षाणो अँहसः प्रतिस्म देवरीषतः (24)मिमिक्षणः (519)

वलिङ्गायामिति । सप्तम्यन्तात्परस्य नेति च किम्? सुतेषु नः (363)। वाजेषु नः (598) ।त्वष्टा नः (299) (उक्थमिन्द्रायशँस्यम् इत्यत्र363)

सू.अ - वकार युक्त पादवाली ऋचाओं में नः मूर्धन्य होता है। सप्तमीविभक्ति युक्त पद में नहीं होता है।।

विशेषः - तुलनात्मकं सूत्रम्- परीति तैर्नः (ऋ.प्रा)। रक्षाणः पूषः... आयूंषि (वा.प्रा,3.87)। नश्च धातुस्थोरुषुभ्यः (पा.सू,8.4.27)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(नकारे मूर्धन्यभावस्य अपवादसूत्रम्)

## 275. न मध्यमवर्गीयैर्व्यवेतं लशसैश्च ॥ 10 ॥

वृ - न मध्यमवर्गीयैर्व्यवेतम्। लशसैश्च न गम्यते।

व्या - मध्यमवर्गीयैः लशसैश्च व्यवेतं 'न' इत्यक्षरं मूर्धन्यं नापद्यते। व्यवेतं व्यवधानं प्राप्तम्। 'ष'कार'न'कारयोः मध्ये मध्यमवर्गीयः यदि व्यवधीयते तर्हि न मूर्धन्यापत्तिरित्यर्थः।

3 2          1 2    3 1 2<br>
उदा - क्षितीनाम् (262) दक्ष साधनः । पवस्व दक्षसाधनः (474)।<br>
2 3 1 2 3 1 2          2 3 1 2 3 1 2<br>
राजानं । सोमँ राजानं वरुणम् (91)। रशनाभिः । अच्छा बर्हीरशनाभि<br>
1 2 3 1 2 3 2 3          1 2<br>
र्नयन्ति (523)। रसिनः। पिबा सुतस्य रसिनः (239)। रथानाम्(149)।<br>
3 2          1 2      3 1      3    2      3<br>
हारियोजनम् (424), अरिष्टनेमिं पृतना (332), ऋजुनीति (218), कृ<br>
1 2<br>
णोतन (395), हिरण्यनेमयः (417), शाक्करलोमायनम्। प्रतापनम्। प्रमोचनम्। विष्वक्सेनः। ह्रस्वेन वृषलेन। लोलाक्षदर्शनादर्शेन। दर्शनीयेन।

सू.अ - य, व वर्ग के मध्यम वर्ण ल, श, स एवं च इन वर्णों के बाद न मूर्धन्य भाव को प्राप्त नहीं होता।

इति षष्ठो दशकः

0-----ॐ-----0

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ सप्तमो दशकः
(सकारस्य मूर्धन्यभावः)

### 276. क्राभ्यां सो वैभक्तः ॥ 1 ॥

वृ - ककाररेफाभ्यां परः सकारो गम्यते वैभक्तः।

व्या - णत्वरूपं मूर्धन्यमुक्तम्। इदानीं षत्वरूपमूर्धन्यमुच्यते। ककाररेफाभ्यां परः विभक्तिसम्बन्धी सकारः षकारमापद्यते।

1 2 3 1
उदा- ऋक्षु। वणिक्षु। वाक्षु। धूर्षु (षड्विं.2.3) चतुर्षु। पृक्षु - एन्द्र पृक्षु
1 2 3 1 2
(231)। पूर्षु। गीर्षु - विश्वासु गीर्ष्वायतम् (170)। अत्र सु इति सप्तमी-
2उ 3 2 3 2 3
बहुवचनविभक्तिः। क्राभ्यां इति किम्? महत्सु - तमिन्महत्स्वाजिषु (411)। वैभक्त इति किम्? वाक् सूक्तम्।

सू.अ - ककार एवं रेफ के बाद अवस्थित विभक्ति का सकार मूर्धन्य हो जाता है।

### 277. ऊगि ॥ 2 ॥

वृ - ऊगि च प्रत्यये गम्यते।

व्या - ऊगिप्रत्यये सकारः षकारमापद्यते।

2र2र 2
उदा - षूगायताऽ313उ (साम.439)। षूगायाता प्रमित्राय प्रा इत्यत्र।
1 2 न
ऊगि इति किम्? राजसुगौऽ3 (साम.441)। अत्र उकारस्य
1 2
दीर्घाभावात् सकार एव। स्ये - त्वामिद्धि (234 त्वां- इत् - हि)

सू.अ - सामगान में उ और ग बाद में होतो सकार मूर्धन्य हो जाता है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## 278. अन्ताक्षरात् ॥ 3 ॥

वृ - अन्ताक्षराच्च परो गम्यते।

व्या - अवर्णव्यतिरिक्तानां अचां अन्ताक्षरमिति संज्ञा। अन्ताक्षरात् परः वैभक्तः सकारः षकारमापद्यते। वैभक्त इति क्राभ्यां सो वैभक्तः सूत्रात् अनुवर्तते।

3 2 3 1 2 3 2
उदा - ब्राह्मणेषु । ब्राह्मणेष्वमृतं हितम्(1300)। एषु । तेषु । केषु।
1 2 3 1 2र
अन्ताक्षरादिति किम् ? कासु -एन्द्र पृक्षु कासुचित् (231)। वैभक्त इति
1 2 32उ 3
किम् ? याहि सुषुम। आयाहिसुषुमाहिते (191)। यासु । तासु । कासु ।

सू.अ - अन्ताक्षर (सन्ध्यक्षर) के बाद आने वाला सकार मूर्धन्य हो जाता है।

## 279. उपसर्गात् ॥ 4 ॥

वृ - उपसर्गाच्च परो गम्यते।

व्या - अन्ताक्षरादित्यनुवर्तते। अन्ताक्षरात् उपसर्गात् परः सकारः षकारमापद्यते।

3 1 2 3 1 2 3 1 2 3 1 3 1
उदा - सु- सुतः। इन्द्राय सोम सुषुतः परिस्रव (561)। नि -सीदत । स
2 3 1 2र 1 2 3 1 2 1 2 3
खाय आ निषीदत (568), अच्छा व इन्द्रम् (375), आ सोता (580),
1 2 3 1 2 3 2 3 2 3 2 3
सोम उष्वा (515), प्र ते (739), सखा स्व (390 स्तुष ऊ षु), अभीषत
3 1
(309) अतीह्यौ (223) । उपसर्गात् इति किम्? दिवि - सत्। दिवि
2र 1 2 3 2 3 1 2
सद्भूम्या ददे(467), रास्वा च न उपमाते पुरुस्पृहम् (43)। आ नो (43),
3 2 उ 3 1 2 3 1 2
अभि त्यम् (376), उच्चा ते (467), उदीरत (414), अन्ताक्षरात् इति

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



किम्? अप सेधत (397) अप सेधत दुर्मतिम्। स्वराद्यमुषाद्विशेषः समासो वा।

सू.अ- उपसर्ग से परे सकार मूर्धन्य हो जाता है।

## 280. राम्णसु ॥ 5 ॥

वृ - रेफाकारमकारिणि पदे द्वैधं णसुलिङ्ग एव पादे मूर्धन्यमापद्यते।

व्या - रात् रेफात्परः मकारिणिपदे, न सु सुलिङ्गव्यतिरिक्ते पादे एव वर्तमानः सकारः मूर्धन्यमापद्यते।

उदा - इन्द्र-अभि-स्याम । इन्द्राभीष्याम वृषमणस्त्वोताः (336)। निवृत्तानि । अपस्रिधम् (397), विस्रुतयः(453), विसेनाभिः (334)। परि स्वानः (475)। अधि सानः (529),त्रि (द्विः) यास्वादिरिति वा न निवर्त्यम्। न सुलिङ्गे पादे इति किम्? इन्द्राय सोम सुषुतः परिस्रव (561) । सुलिङ्गः सुकारः।

सू.अ- रेफ, आकार और मकार युक्त पद में तथा ण और सु युक्त पाद में आने वाला संयुक्त सकार मूर्धन्य भाव को प्राप्त होता है।

## 281. उद आद्ये ॥ 6 ॥

वृ-उस्थात् पर आद्ये पादे मूर्धन्यमापद्यते।

व्या-उस्थात्परः अमकारिणि पदे वर्तमानः सकारः आद्ये पादे मूर्धन्यं आपद्यते।

उदा- आ-इहि-उ-सु । एह्यू षु ब्रवाणिते (7)। मा- उ- सु- त्वा । मोषु त्वा वाघतश्चन(284) यदि वीरः (82),कु- स्थः। कुष्ठः (305), परीतोषि

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(512), सोम उष्वा (515)। उस्थात्पर इति किम्? अयमुते समतसि (183)।अमकारिणि पदे इति किम्? उत्वा मन्दन्तु सोमाः (194)।आद्ये पादे इति किम्? कण्वेषु सु सचा पिब (252)। कश्यपपुच्छे (आ.गा .248)

सू.अ - प्रथमपाद में उ के बाद विद्यमान सकार मूर्धन्य हो जाता है।

### 282. क्षाज्जागते ॥ 7 ॥

वृ- अक्षरात् पदाज्जागते पादे मूर्धन्यमापद्यते।

व्या - अक्षरात् पदात् परमक्षरं प्रकृतं सकाररूपं जागते पादे मूर्धन्यं आपद्यते।

उदा -महान्- हि- सः। विदे वृधस्य दक्षस्य महाँ हिषः (381)। स्तुषे -उ- सु- वः। स्तुष ऊषुवो नृतमाय धृष्णवे (390) ।शग्ध्यूषु (253)। जगती छन्दसि प्रतिपादं द्वादशाक्षरः। तादृश द्वादशाक्षरयुक्तः पादः जागतः पादः। अक्षरात् पदादिति किम्? उप ब्रह्माणि सवनानि वृत्रहन् (269)। जागते पादे इति किम्? उपो नु ससपर्यन् (196)। ब्रह्माणि स (269) । साक्षरादक्षरमित्यधिकारः।

सू.अ - जगती छन्द के पाद में एकाक्षरीय पद के परे सकार मूर्धन्य हो जाता है।

### 283. सन्ध्यः ॥ 8 ॥

वृ - सन्ध्यश्चान्ताक्षरात् परो गम्यते।

व्या - अन्ताक्षरात् सूत्रात् अन्ताक्षरादित्यनुवर्तते। अन्ताक्षरात् परः सन्ध्यः संयुक्तः व्यञ्जनपरकः सकारः मूर्धन्यं आपद्यते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदा- ज्योतिष्कृणोति सूनरी (303)। वास्तोष्पते ध्रुवा स्थूणा (275)। चतुष्पात् (367)। गोष्पदे (241.स्तोभः)। जमदग्निव्रते (आ.गा.201 ज्योतिष्य), परिष्कृतम् (487)। अन्ताक्षरादिति किम्? दिवस्पायुर्दुरोणयुः (39)। सन्ध्य इति किम्? उपो नु स सपर्यन् (196)। पूर्वे (550)।

सू.अ - संयुक्त अक्षर से परे सकार हों तो वह मूर्धन्य हो जाता है।

विशेषः- उदा- चतुः पात् -चतुष्पात्। ज्योतिः कृणोति- ज्योतिष्कृणोति। तु.सू-सन्ध्य उष्माप्यनिङ्ग्ये (ऋ.प्रा,5.41)। इदुदुपधस्य चाप्रत्ययस्य (पा.सू,8.3.41)।

## 284. दन्त्ये स्पर्शे ॥ 9 ॥

वृ - दन्त्ये प्रत्यये द्वैधं स्पर्श एव पादे मूर्धन्यमापद्यते।
व्या - पादमध्ये वर्तमानः सकारः स्पर्शरूपदन्त्ये प्रत्यय एव मूर्धन्यमापद्यते।

उदा - नकिष्टं कर्मणा नशत् (243), न किष्ट्वानु (950)। योनिष्ट इन्द्र सदने अकारि(314)। गोभिष्टे(575)। दुष्टरम् (299), सुष्टुतः (1502), महानाम्नीषु आभिष्ट्वमभिष्टिभिः (642), विभोष्ट इन्द्र (366) स्पर्शरूपदन्त्ये इति किम् ? अबोध्यग्निस्समिधा जनानाम्। अग्निः समिधा (73), अस्थुः सुतेषु (349), यावाहुःस (361), चम्वोः सुतः (490), पादमध्ये इति किम्? त्वमग्ने गृहपतिस्त्वं होता (61)। सेतुषाम्नि (आ.गा 89 सेतूंस्तर)। चतुरनुगाने (आ.गा 163-166

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तेभिस्तेज आपः), विष्णोर्व्रते (आ.गा 193 शोचिस्तपोहरः)। पादमध्यस्येत्यधिकारः।

सू.अ - पाद में दन्त्य स्पर्श ही बाद में होने पर संयुक्त सकार मूर्धन्य भाव को प्राप्त होता है।

विशेषः - उदा- न किः तम्- नकिष्टम्। योनिः ते- योनिष्टे। दुः तरम्- दुष्टरम्। अत्र ठ्यदन्त्ये परे सूत्रेण विसर्जनीयस्य सकारः तदनन्तरं अनेन सूत्रेण सकारस्य मूर्धन्यम् एवं षाद्दन्त्यः सूत्रेण तकारस्य टकार प्राप्तिः।

तु.सू- ऋ.प्रा,5.33-38, वा.प्रा,3.74-79, पा.सू, 8.3.101, 104।

## 285. द्विवति परे ॥ 10॥

वृ - द्विवति पदे द्वैधं पकारपर एव पादे मूर्धन्यमापद्यते।

व्या - द्विवति परे अक्षरद्वयपरक स्पर्शरूपदन्त्ये परे सकारः मूर्धन्यमापद्यते। यदि उत्तरपदं पकारादि स्यात् ।

3 2 3 1 2र 3
उदा - अग्निः- तपति। अग्निष्टपति (स्तोभः 1.2), प्रतिदहति। धनुः त

1 2र 1 2 3 1 2
न्वन्ति - पौंस्यम् । धनुष्टन्वन्ति पौंस्यम् (551)। द्विवति पर इति किम्?

12र 3 2 3 2 1 2 3 1 2 3 1 2र
इन्द्रं-गीर्भिः-तविषं-आ। इन्द्रं गीर्भिस्तविषमा विवासत (382)।

3 1 2 3 1 2 3 2
शिशोस्तस्याह्नः, सुवीराभिस्त (108), सजूस्त (370), तं गीर्भिः (74)।

सू.अ- द्व्यक्षरात्मक पद में वर्तमान संयुक्त सकार पकार परे रहते मूर्धन्य हो जाता है।

विशेषः - अत्र पि इति सूत्रेण विसर्गस्य सकारः एवं अनेन सूत्रेण सकारस्य मूर्धन्यः एवं षाद्दन्त्यः सूत्रेण तकारस्य टकारः प्राप्तिः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(दन्त्यस्य मूर्धन्यभावः)

## 286. षाद्दन्त्यः ॥ 11 ॥

वृ - षात् परो दन्त्यो मूर्धन्यमापद्यते।

व्या - षकारात्परः दन्त्यः मूर्धन्यमापद्यते।

2 3 2 3 1 2 2 3 2 2 3 1 2र

उदा - कु-स्थः। कुष्ठः को वामश्विना (305) । न-किः-तम्। नकिष्टं कर्म

3 3 2उ 2 3 2 2 3 2 3 1 2 3

णा नशत् (243)। धृष्णुहि (413) न-किः-त्वत्। न किष्ट्वद्रथीतरः (950) अत्र तवर्गस्य टवर्गापत्तिः।।

सू.अ - षकार के बाद विद्यमान दन्त्य मूर्धन्य हो जाता है।

विशेषः - कु स्थः इत्यत्र सन्ध्यः सूत्रेण सकारस्य मूर्धन्यप्राप्तिः, तदनन्तरं ष कार परे अवस्थितः थकारस्य मूर्धन्य ठकारः भवति।

इति सप्तमो दशकः

इति पञ्चमः प्रपाठकः

## इति शाकटायनोक्तमृक्तन्त्रव्याकरणं सम्पूर्णम्

**ॐ-----तत्-----ॐ-----सत्-----ॐ**

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



# अथ ऋक्तन्त्रविवृतिः

श्रीमते सामवेदाय नमः।। श्रीमते हयग्रीवाय नमः।।

अथ गायत्रगानप्रकारो निरूप्यते। यथा सावित्री गेयं यत्रागीतमति देवताध्यायब्राह्मणेन यत्र गायत्रं न गीतं यत्र यत्र वा गायत्रं गेयं तत्र तत्र यथा सावित्री तत्सवितुर्वरेण्यमित्यस्यां येन प्रकारेण गीयते गायत्रं तत्सावित्रीगानप्रकारमनतिक्रम्य गेयम्। सावित्र्यां गेयगानवदेव गेयमित्यतिदेशात् सर्वत्र गायत्रमात्रे योनिवद्गानमेव कर्तव्यं नार्चिकवदुच्चनीचमिति प्राप्तम्। गायत्रगानं च प्रकृतिविकृति-साधारण्येन देवताध्यायाध्ययनसिद्धमेव।

गानं चार्षेयब्राह्मणे दर्शितम्। तद्यथा "गायत्रं पौष्कलमाग्नेयं प्रथमायां वा यथादिष्टं गेयं प्रथमस्वरैर्वा चतुरक्षर वृद्धान्तैराद्यपात्प्रस्ताव ओंकारान्तो हुंमा वेत्यन्तः स्तोभो वृद्धो भवति इमे वै लोका गायत्रं" इति महाब्राह्मणे सप्तमाध्यायस्य प्रथमखण्डे त्र्यावृत् गेयमित्युक्तम्। अस्यार्थः । त्र्यावृदिति क्रिया विशेषणम्। आवृन्नाम गीतिखण्डः। तिस्रः आवृतो यस्मिन् तत् त्र्यावृत् तद्यथा भवति तथा गेयमिति।

तस्य व्याख्यानमेवम्।प्रथमायां वा यथादिष्टं गेयमित्यादि। सर्वत्र वा शब्द एवकारार्थे। प्रस्तावप्रतिहारनिधनानामक्षरपरिमाणं यथा योनि चिकीर्षेत् वैच्छन्दसेष्विति वचनेन यथादिष्टं विच्छन्दः स्वादिष्टं विहितं गायत्रं यथा सावित्री भवति तथा गेयमिति नोंकारयोरावृतोरक्षरावापः। उक्तगेयभक्तित्वेऽपि यथा सावित्र्येवा-क्षरपरिमाणमिति। तथा च सूत्रं गायत्रपटले ज्यायसि छन्दसि प्रथमायामावृत्या वपेतदुत्तमं पादं शिष्ट्वाष्टाक्षरमिति धानञ्जय्यः इति। कथं गानमित्यत आह- प्रथमस्वरैर्वेति। प्रथमस्वरैर्वा सर्वैरक्षरैः प्रथमा ऋक् गेया ? उत सर्वेषामक्षराणां प्रथमस्वरेऽवस्थानप्राप्तौ पूर्वा

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वावर्गाववनर्द्याविति धानञ्जय्य इति सूत्रेण अन्त्यस्याक्षरस्य नीचैरव स्थापनरूपावनर्दनं क्रियते। प्रेङ्खणरूपेण योनिवद्गानम्। अथ द्वितीयामावृतमाह चतुरक्षर वृद्धान्तैरिति। अत्रापि काकाक्षिन्याये-नावनर्देदिति ब्राह्मणमिति धानञ्जय्याशयः।

अथ गौतममतमपि ब्राह्मणभाष्यकार एव व्याचख्यौ। तद्यथा मध्यमायामावृति द्वौ स्तोभौ कुर्यात्तावववनर्द्यौ इति गौतमः। अस्यार्थः। मध्ये गीतिभागे तदन्त्यस्वर सदृशस्वराव नियताववनर्दनीयौ इति। तावेव गानेन दर्शयति अभिदेवाँ इया आ आ इति। त द्वावाकारावनत्याक्षर सदृशौ प्रत्येकमवनर्दिता वित्यर्थः। तथा च न नित्यावर्दन प्रथमद्वितीयगीति खण्डान्त्याक्षर द्वयावनर्दन विषयं द्विरवनर्देदिति ब्राह्मणम्। किन्तु आगन्तुक स्तोभद्वयावनर्दनाभि प्रायमिति गौतमाशयः। इदमप्यवनर्दनद्वययोनावधीतमेव। तथा च सर्वत्र ओंकाराविति्येके स्तौभानैकान्त्याच्चेति सूत्रे। नित्यासस्वर शिष्टान्त्याक्षर सदृश स्वरान्तरद्वयं स्तौभिकमोंकारद्वयमेवेति। केचित्पक्षमुक्त्वा ऋगक्षरसदृशावेवेत्याचार्यमतमुक्तम्। तथा च मध्यमगीतिखण्डस्यायं स्वरनिष्कर्षः। प्रथमाक्षरस्य द्वितीय स्वरारम्भोऽर्थात्प्राप्तः। चतुरक्षरवृद्धान्तैः प्रथमस्वरैः इत्यनेन प्रथमाक्षरव्यतिरिक्तानामन्त्यस्य च प्रथमस्वरावस्थानं प्रथमस्वरैर्वेति संबध्यते। तदयमर्थः। चतुरक्षराणि च वृद्धान्तश्च चतुरक्षर वृद्धान्तास्तैश्चतुरक्षरवृद्धान्तैः। वृद्धाश्च ते अन्ताश्च वृद्धान्ताः। चतुरक्षराणि च प्रथमस्वरैरेव वृद्धान्तसहित चतुरक्षरैर्गेयमिति वृद्धभूतचकारमाक्षरेण सह तद्व्यवहितैश्चतुर्भिरक्षरैः प्रथमस्वरैः पञ्चभिरक्षरैरिति यावत्। तथा च मध्यामायामावृति षडक्षराणां प्रथमस्वरगाने प्राप्ते तत्र प्रथमाक्षरस्य नीचारम्भः पुनः चतुर्णामक्षराणामन्त्यस्य च षष्ठस्य प्रथमस्वरत्वमुक्तं भवति। तत्र पूर्वावावर्गाववनर्द्यौ इति धानञ्जय्यः इति उच्चैः स्थितस्य

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नीचैरवस्थापनरूपमवनर्दनम्। अन्त्यस्य च वृद्धस्य । तथा च ब्राह्मणभाष्यकारेण व्याख्यातम्। पूर्वावावर्गाववनर्द्याविति धानञ्जय्यः इति अस्यायमर्थः। पूर्वौ गीतिखण्डौ अवनर्दनीयौ । अवहीनेदित्यर्थः।

पूर्वयोर्गीतिखण्डयोः अन्त्याक्षरयोरवस्वरणं नित्यमित्युक्तं भवति। एतदपेक्षया द्विरवनतप्रथमस्वरावस्थितस्य षष्ठस्य च वृद्धस्य द्वितीयस्वरेऽवस्थानरूपावनर्दनं ततश्चरमस्वरसदृश स्वरद्वयस्य प्रत्येकं द्वितीयस्वरावस्थितस्य उच्चैः कृत्वा नीचैरवस्थापनमिति। अथ त्र्यावृत् गेयमिति अस्य प्रतिहारभक्तेः पूर्वत्वशङ्कां व्यावर्तयति। आद्यपात् प्रस्ताव ओंकारान्त इति स्पष्टम्। तथा च प्रस्तावभागस्य न त्र्यावृत् शब्दार्थान्तर्गतत्वमिति भावः। तदिदं गायत्रस्य पदेन प्रस्तावस्सर्वत्र इत्यस्य सूत्रस्य मूलम्। सर्वत्राक्षरेणेति धानञ्जय्यः तथा पुराणं ताण्डमित्यस्य तत्सवितुर्वरेण्यमिति देवताध्यायगत विकर्षप्रस्तावो मूलमिति। अथ द्विरवनर्देत् हिंकुर्यात्तृतीयमिति ब्राह्मणे तृतीयावनर्दनरूपो हिंकारो विहितः । स च हिंकारमात्रो न भवति किन्तु आकारसहित एवेति दर्शयति। मा एवेत्यन्तस्तोभो वृद्धो वेति। हिंमा इत्यन्तं मध्ये स्तोभ उद्गीथोपद्रवयोर्मध्ये स च वृद्ध एव। तस्याप्यवनर्दनरूपत्वेन नीचैरवस्थापनं प्रेंखणरूपेण क्रियते। मध्यमपदपर्यायान्तः शब्देन सापेक्षेणोद्गीथभक्तेः परं प्रतिहारः। ततः परमुपद्रवभक्तिः इति सामर्थ्यात् सूचितम्। तथा च हिम्मा इति प्रतिहारः। क्षातो इति उपद्रवः । उपद्रव एव त्र्यावृद्गेयमिति गीतिखण्डत्रित्व संख्यापूरक इत्युक्तं भवति। अन्ते स्तोमो वृद्धो वेति पृथगपि छेदस्तेनान्त उपद्रवान्तः सामावसाने स्तोभः कार्यः निधनत्वेन। स च क इत्यत आह वेति। वाकार इति । वा पक्षान्तरं । वा आ इति वा वर्णच्छेदः। तथा च आकार एव वा निधनमिति। तथा चैतदभिप्रायेण सूत्रवचनानि।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यथा पावमानायेन्दवा इत्येकावृत् अभिदेवां इयेत्यपरा क्षाता इत्यपरेति। ऊर्ध्वं रतस्याया द्व्यक्षरं शिष्ट्वा हिंकारं ब्रूयात् हिम्मा इति रेतस्यायामित्यादि क्षातो आ क्षातो वा इत्यादीन्यनुसन्धेयानि।

अथोदात्तानुदात्तसन्धेरुदात्तत्वं विधातुमाद्यार्धमात्रोदात्त एव स्वरित इति विधातुं प्रथममुदात्तस्योत्संज्ञामाहः-

**51. उदात्तमुत् ॥ 1 ॥**

अथोदात्तानुदात्तसन्धेरुदात्तमाहः-

**52. वान्त्सन्धिः ॥ 2 ॥**

इति । उदित्यनुवर्तते। विवृणोति। उदात्तवान् सन्धिरुत्संज्ञो भवतीति।
2 3 2 1 2 3 2 2 3
उदाहरति। आ-इन्द्र-सानसिम् । एन्द्रसानसिम्(129)। आ-इन्द्र-याहि।
1 2 3 2 3 2 1 2र 2 3 2 3 2 3 2
एन्द्र याहि(348)। आ-इत-उ-नु-इन्द्रम्। एतो न्विन्द्रं (350)। उत्-घ- इत्
3 2 2उ 3 2 1 2र 1 2र 3 2उ 3 1 2 3
-अभि। उद्घेदभि (125)। अत्र-अह-गोः-अमन्वत। अत्राह गोरमन्वत (147) आद्योदाहरणत्रये आकारेकारसन्धेरशब्दस्योदात्तत्वम्। उद्घेदित्यत्र घस्यानुदात्तस्य इच्छब्दस्योदात्तस्य सन्धेः घेच्छन्दस्यो-
3 1
दात्तत्वम् । अथोदात्तवानित्यस्य व्यावर्त्यमाह। उदात्तवानिति। उपो नु
1 2र 3 2 2 र 3 2 र 2
। उप-उ-नु (196)। क्वेयथेति । क्व-इयथ (271)। स्वरितानुदात्त-सन्धित्वात् 'पो' शब्दस्य 'क्वे' शब्दस्य च नोदात्तवानुत्सन्धिः ॥ 2 ॥

अथाद्यार्धमात्राया एवोदात्तत्वं स्वरितत्वं चाहः-

**53. आद्यार्धमात्रा स्वरितम् ॥ 3 ॥**

इति । तस्य वृत्तिः। आद्यार्धमात्रोत्संज्ञा भवति। तत्स्वरितं नामेति। वर्णस्यार्धमात्र उत्संज्ञा भवति। उदित्यनुवर्तते। उदात्तमुदिति विधानात्। आद्यार्धमात्रा उदात्ता भवतीत्यर्थः। उदात्ताद्यार्धमात्रा

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्वरितमिति वचनादाद्यार्धमात्रोदात्तांश एव स्वरितं नाम। नामशब्दस्य प्रसिद्धार्थत्वात्। यत् स्वरितमिति प्रसिद्धिं तदुदात्त एव स्वरितमिति व्यवह्रियते। न ह्युदात्तानुदात्तप्रचयस्वरत्रयव्यतिरेकेण स्वरितं नाम स्वरान्तरमस्ति। अवशिष्टार्धमात्रानुदात्तः प्रचयस्थान-त्वात् स्वरप्रचय इत्यर्थः।

तदुक्तं नारदशिक्षायाम्-

अत ऊर्ध्वं प्रवक्ष्यामि ह्यार्चिकं तु स्वरत्रयम्।
उदात्तश्चानुदात्तश्च तृतीयः प्रचयस्वरः॥ इति ।

अत ऊर्ध्वं प्रवक्ष्यामि ह्यार्चिकं तु स्वरत्रयमिति प्रतिज्ञाय तृतीयः प्रचयस्वर इत्युपसंहारात् स्वरितं नाम स्वरान्तरमुदात्तानुदात्त-प्रचयव्यतिरेकेण नास्तीत्यर्थः स्फुट एव। तर्हि स्वरितव्यवहारः स्वरान्तरत्वाभावे निरालम्बनं स्यादित्यत आह -

य एवोदात्त इत्युक्तः स एव स्वरितः स्वरः॥ इति ।

अवशिष्टांशस्तु स्वरप्रचय इत्यत आह -

प्रचयः प्रोच्यते तज्ज्ञैर्न चात्र स्वरितान्तरम्॥ इति ।

उदात्ताद्यार्धमात्रा स्वरितमिति उदात्त एव स्वरित इति विधानात् अर्थादवशिष्टांशस्वरः प्रचय इति तज्ज्ञैः स्वरितस्वरुपज्ञैरुदात्त एव स्वरितशिष्टांशः स्वरितोत्तरप्रचयत्वात् स्वरप्रचय इति व्यवह्रियते। यथा एक एव वर्णः ऋक्षु स्वरप्रचय इति च व्यवह्रियते। न चात्र स्वरितान्तरं स्वरत्रयव्यतिरिक्तं व्यवह्रियते तज्ज्ञैरिति।

य एवोदात्त इत्युक्तः स एव स्वरितः स्वरः।
प्रचयः प्रोच्यते तज्ज्ञैर्न चात्र स्वरितान्तरम्॥ इति

वचनस्यार्थः। अत्र तज्ज्ञैरित्यनेन ये स्वरितमिति स्वरान्तरमस्ति तेन साकं स्वरचतुष्टयमृक्ष्वप्यस्तीति वदन्तीति ते तदज्ञा इति स्वरितस्वरुपाज्ञा इति वचनमेव तान्निन्दति। तद्ध्येकस्यैव वर्णस्योच्चनीचात्मकत्वं कथमित्यत आहः-

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उच्चैर्वर्णस्वरो नीचः स्वरतो द्विधा स्मृतः॥ इति ।

मात्रिको वर्ण एवैक आद्यार्थेनोच्च इतरार्धेन नीच इति । स्वरतः उच्चनीचस्वरभेदतः। द्विविधः स्मृत इति। ऋक्तन्त्रकारादिभिः स्मृत इत्यर्थः। यदि च स्वरितं नाम स्वरान्तरमस्ति तदा उच्चनीचप्रचयानामिव स्वरितप्रदर्शन स्थानान्तरमपि स्यात्।

यथा तैत्तिरीयाणां चातुस्वर्यात् स्थानचतुष्टयम्।
द्वितीयाद्यांस्तु मन्द्रान्तांस्तैत्तिरीयाश्चतुरः स्वरान्॥

इति वचनात् । नह्यस्माकं स्थानचतुष्टये स्वरप्रदर्शनमस्ति। उच्चनीचापेक्षया स्वरितान्तराभावे तस्य स्थानाभावे च वचनान्तरम्। यथा -

उच्चादुत्ततरं नास्ति नीचान्नीचतरं तथा ।
वैस्वर्ये स्वारसंज्ञायां किं स्थानं स्वार उच्यते॥ इति

उच्चादुच्चतरं स्वरितमित्युच्यते वा नीचान्नीचतरं वा तदुभयाभावात्। तस्माद्वैस्वर्ये स्वारसंज्ञा। विस्वरत्वेनोच्चारणमेव स्वार इति नाम्ना वदन्ति। वैस्वर्ये चोच्चनीचांशयोर्मध्ये स्फुरणादुभयसाधारणं न स्वरान्तरं येन स्थानमपि तस्य स्यात्। तदुक्तम् -

उच्चनीचेऽथ मन्मध्ये स्वरः साधारणः स्मृतः। इति

अत एव न स्वारं स्वारसंज्ञायां प्रतिजानाति शैक्षिकः शैक्षिकोऽपीत्यर्थः। ऋक्तन्त्रकारतद्व्याख्यातृभिः स्वरितस्योच्च नीचव्यतिरेकेण स्वरसंज्ञाकरणाभावात् स्वरितस्य स्थानान्तरसत्वे द्व्यन्तरत्वमप्यार्चिकस्य स्वरस्य स्यात्॥

तथात्वे- एकान्तरस्वरो ह्यृक्षु गाथासु द्व्यन्तरः स्वरः।
सामसु त्र्यन्तरं विद्यादेतावत् स्वरतोऽन्तरम्॥ इति

वचनविरोधः स्यात्। गाथासु यजुःषु चातुस्वर्येण स्थानचतुष्टयस्य विद्यमानत्वात् द्व्यन्तरम्। अस्माकं स्थानत्रयत्वेन त्रिकस्वर एकान्तर

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



एव। तस्मादाद्यार्धमात्रोदात्त एव स्वरितः। न स्वरितं नाम स्वरान्तरमस्तीति। आद्यार्धमात्रा स्वरितम्॥ 3॥

अथाद्यार्धमात्राया उच्चीभावस्य लक्षणमाह -

**54. उन्नीचेमे ॥ 4॥**

इति । विवृणोति। उच्ची भवति तत्स्वरितं नीचे वा प्रत्यये विरामे वेति। आद्यार्धमात्रा स्वरितमित्यनुवर्तते। उच्ची भवति आद्यार्धमात्रेत्यर्थादनुवृत्तिः। तत् स्वरितमित्यनुवादः। उत्तरत्र स्वर्यत इति व्यवहारोऽपि आद्यार्धमात्रा स्वरितं विद्यादिति सूचनाय। तच्च स्वरितं नीचे वा प्रत्यये विरामे वार्धर्चान्ते ऋगन्ते च भवतीत्यर्थः। उदाहरति। नि होता सत्सि बर्हिषि(1)। स उच्छब्दाभावेऽपि स्वरितशब्देनैव

1 2 3 1 2 3 1 2 3 1 2 3 1 2

व्यवहाराय। सखाय इन्द्रमूतये (400) अभि त्वा शूर नो नुमोऽदुग्धाः

2 3 2 3 1 2 3 1 2 3क2र 1 2

(233) इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन् वीर्यम् (412)। यदिन्द्र चित्र म

3 2उ

इह न (345) एवमादिषु। नीचे वा प्रत्यये विरामे वा। आद्यार्धमात्रा नीचविरामयोः पूर्वस्य वर्णस्योच्ची भवति। तत्स्वरितमित्यर्थः॥ 4॥

2 3 1 2

ननु नीचे वा प्रत्यये विरामे वा स्वरितं भवति चेत् अग्न आयाहि

3

(1) त्वादावाकारादेरुदात्तस्यापि नीचपरत्वात् स्वरितस्योदात्तमेव, प

1 2 3क 2 र 3 2

वित्रे चम्वोस्सुतः (490) इत्यादौ विरामपरत्वात् त शब्दादेरपि स्वरितत्वं ...दित्यत आह -

**55. नीचमुच्चात् ॥ 5॥**

1 2

इति । विवृणोति। नीचमुच्चात्परं स्वर्यत इति। उदाहरति आ याहि (1)

1 2 1 2 3 3 1 2र 2 3

वारवन्तम् (17) स्वादिष्ठया (468) । अग्ने स्तोम (1405)। पान्तम्

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(155)। इन्दो (505)। आ याहि (191) प्रभृतीनि। अग्ने युङ्क्ष्वा (25)। अग्ने मृड (23)। सोमं सोमपते पिब (402)। एन्द्र याहि (348)। अपां नपातम् (62)। इन्द्रायेन्दो (472)। रुचाभि गा इहि (505) आ याहि सुषुमा हि त इन्द्र (191)। अग्न आ याहि (1552)। इत्येवं प्रभृतीनि उदाहरणानि। तत्र संहितायां नीचमुच्चात् परे स्वर्यते। ननु तर्हि उदात्तात् परस्य नीचस्य स्वरितत्वे अग्न आ याहि (660) इत्यादौ उदात्तात् परस्य नीचस्य ग्नेरित्यादेरुदात्तात् परस्यापि संहितायां स्वरितापत्तिरित्यतः पूर्वसूत्रानुषङ्गमाह नीचे वा प्रत्यये विरामे वेति। तथा च नीचे वा प्रत्यये विरामे वा नीचमुच्चादिति पूर्वसूत्रांश-शेषानुवृत्या एकवाक्यत्वेन नोक्तदोष इत्यर्थः। अग्न आ याहीत्यादौ ग्नशब्दादेर्नीचपरकत्वान्न स्वरितापत्तिः। अकारस्य नीचपरत्वेऽप्यु-दात्तपरत्वाभावान्न स्वरितः। अथ नीचे वा प्रत्यये विरामे वेत्यनुवृत्तेः स्वयमेव व्यावर्त्यमाह नीचे वा प्रत्यये विरामे वेति। रि चम्वोरिति। जनो न पुरि चम्वोः (513) इत्यत्र च शब्दस्य रि शब्दादुच्चात् परत्वेऽपि नीचप्रत्ययकत्वाभावात् स्वरितप्रत्ययकत्वेन न स्वरितः। विरामपर-कत्वाभावात् च। उन्नीचे, नीचमुच्चादिति पृथक्सूत्रकरणेन अनुवृत्या समुच्चयपरा करणेन च एकोदात्तानेकात्तपरयोः स्वरितयोः सूत्रसमुच्चयो लक्षणम्। तदन्यस्य स्वरितस्यान्यतरदेव लक्षणमिति सूचनाय। तद्यथा सखायो दीर्घजिह्व (545) पुरि चम्वोः (513)। पवित्रे चम्वोः सुतः (490) इत्यादि स्वरितेषु नीचे वा प्रत्यये विरामे वेति लक्षणम्। अतिप्रसङ्गपरिहारस्तु शास्त्रान्तरेण नीचस्य नीचत्वमुदात्त-स्योदात्तत्वमिति व्यवस्थया द्रष्टव्यम्। नीचमुच्चादिति॥ 5॥

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथोच्चात् संयोगात् परस्य नीचस्य उदात्तानुदात्तसन्धित्वादुदात्त प्राप्तौ स्वरितमाह -

## 56. संयोगात् ॥ 6 ॥

इति । उच्चादिति पूर्वसूत्रा (5)दनुवर्तते। विवृणोति। संयोगात् परे स्वर्यत इति। उदात्तात् संयोगात् परे स्वर्यत इत्यर्थः। पूर्वमसंयुक्तो-दात्तानुदात्तसन्धेरुदात्तत्वमुक्तमत्र संयोगात् परस्यानुदात्तस्य स्वरितत्वं प्रतिपाद्यते। उदात्तानुदात्तसन्धित्वेऽपि संयोगपरत्वा-द्विशेषः। उदाहरति। श्रुष्टि-अग्ने। श्रुष्ट्यग्ने (106)। श्रुष्टिति षकारटकारसंयोगात् उदात्तात् परस्यानुदात्तस्य अकारस्य स्वरित इत्यर्थः। अभि-एति। अभ्येति (524) । एकारः स्वर्यते। स्वसारं जारो अभ्येति पश्चात् (1548) । अभि-अर्चाम। अभ्यर्चाम (535)। अकारः स्वर्यते। प्र गायताभ्यर्चाम । योज-नु-इन्द्र। योजान्विन्द्र (415)। इकारः स्वर्यते। पाहि-उत। पाह्यूउत (36) । उकारः स्वर्यते। मा-नः-इन्द्र-अभि-आदिशः । मा न इन्द्राभ्या3दिशः (128) । आकारः स्वर्यते। पिबा त्वा ऽऽस्य गिर्वणः। पिब-तु-अस्य (1393) । आकारः स्वर्यते। शग्धि-उ-सु-शचीपते । शग्ध्यूऽ3षू शचीपते (253)। उकारः स्वर्यते। उच्चादित्यस्य (5) व्यावर्त्यमाह। यदि-वहन्ति-आशवः। यदी वहन्त्याश (356) आश इत्यत्र आकारस्य नीचत्वेऽपि संयोगात् परत्वेऽपि न स्वरितः उच्चात्परत्वाभावात् संयोगस्य नीचत्वात्। अथ नीचमित्यस्य व्यावर्त्यमाह। अपात्-उ-शिप्री-अन्धसः। अपादु शिप्र्यन्धसः (145) प्रीशब्दादुच्चात् संयोगात् परत्वेऽपि अकारस्य नीचत्वाभावान्न

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



2 3 2 3
स्वरितः। अथ संयगा (6)दित्यस्य व्यावर्त्यमाह। संयोगात्? यावाहुः स
2 3 1 2
युजाविति (361) ।आहुरिति उच्चात् परत्वेऽपि नीचत्वेऽपि आकारस्य संयोगात् परत्वाभावान्न स्वरितः। न च नीचमुच्चादिति (5) सूत्रेण स्वरितं स्यादिति वाच्यम्। हुशब्दस्योच्चत्वेन नीचे वा प्रत्यये विरामे वेति लक्षणाभावात् ।संयोगात्॥ 6॥

अथ स्वरितानुदात्तसन्धेरुदात्तानुदात्तसन्धेश्च स्वरितमाह –

## 57. क्वेयहीन्द्रनीवेति ॥ 7॥

2र 3 2र 3 1 2र 3 2 3क 2र
विवृणोति। क्व- इयथ। क्वेयथ (271) अध- हि - इन्द्र । अधा हीन्द्र
2 3 1 2 3 2र 3 1 2 3
(406)। नि-इव- शीर्षाणि- मृढ्वम्। नीव शीर्षाणि मृढ्व (1656)। उदात्तानुदात्तसन्धेर्वान्तसन्धिः (2) रिति उदात्त प्राप्तौ हीन्द्र नीवे त्यनयोरुदात्तानुदात्तसन्धित्वेऽपि स्वरितो भवति ग्रहणादिति विशेषः। क्वेयहीन्द्रनीवेति॥ 7॥

2 3 2 3 2 1 1 2
अथ तोऽरुण(219) वृधेऽ3स्मान् (239), तेऽमन्वत (606) इत्येतेषूदात्तानुदात्तसन्धित्वेन स्वरित उदात्तो वेति संशयवारणायाह -

## 58. तोर्धेस्ते ॥ 8॥

इति । वान्सन्धिरित्यनेन उदात्तप्रतिपादनात्। कुतः संशयः
3 2 3 1 2 3 2 3
आचार्याणां विप्रतिपत्तेरिति ब्रूमः। विवृणोति। सतः-अरुणप्सु। दूरादि
2 3 2 3 2 3 2 3 3 2 3 2 3 2 1 2 3
हेव यत्सतोऽरुणप्सुः (219) वृधे- अस्मान् । वृधेऽ3स्मान् (239) ते-अ
1 2
मन्वत। तेऽमन्वत (606) इति। एतेषु शब्देषु तोस्तशब्दात् धेः धकारात् तेस्तकारात् परोऽनुदात्तोऽकार उदात्तमापद्यते। पाठे तु स्वरितः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



### 59. नैगिनोभयथा ॥ 9 ॥

व्याचष्टे। उभयथा नैगिना प्रोक्तम्। तोऽर्ध्वेस्त इत्यधिकारः। उदात्तं स्वरितं वा इति। तोऽरुणः, वृधे३ऽस्मान्, तेऽमन्वतेत्येतेषु उदात्तं वा भवति स्वरितो वेत्युभयथा नैगिनाचार्येण प्रोक्तमित्यर्थः। नैगिनोभयथा॥ 9 ॥

### 60. न्यायेनौदव्रजिः ॥ 10 ॥

व्याचष्टे। न्यायेनौदव्रजिराचार्यो मन्यते। उच्चानुच्चसन्धिरुच्च एव कार्य इति न्यायः। वान्सन्धिरिति प्रतिपादनाच्च। तेन तोऽरुणेत्यादौ उदात्त एवेत्यौदव्रजिराचार्यो मन्यत इत्यर्थः। न्यायेनौदव्रजिः॥ 10 ॥

(ऋक्तन्त्रविवृतौ प्रथमः प्रपाठकः)

0-----ॐ-----0

## ऋक्तन्त्रे द्वितीयः प्रपाठकः

प्रथमो दशकः

अथ स्वरितात् पराणां प्रचयानां समानश्रुतित्वमाहः-

### 61. तस्मादुच्चश्रुतिः॥1॥

इति । विवृणोति। तस्मात् स्वरितात् पराणि उदात्तश्रुतीनि भवन्ति।

3 1 2 3 1 2 3 1

उदाहरति। हव्यदातये (1) अभि त्वा शूर (233) प्रभृतीनि। आ जाता

2 2 3 1 2 3 2 3 1 2

सुक्रतो पृण (52) इन्द्रुरिन्द्राय धीयते(489), सुता विदथे अक्रमुः (477) नीचे वा प्रत्यये विरामे वेतीति। । हव्यदातये, आजाता सुक्रतो पृणेत्यादौ विरामपरत्वात् यावद्विराममुदात्तश्रुतिः। अभि त्वा शूर प्रभृतीनीति प्रभृति गौणात् यावयाचमुदात्तश्रुतिरित्यर्थः। अथ नीचे

3 1 2 3क 2 र 3 2 1 2 3क

वा प्रत्यये विरामे वेति ? पवित्रे चम्वोः सुतः (490) सखायो दीर्घजि

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



2 र
ह्व्य (545) इति पवित्रे इति त्रे शब्दात् स्वरितात् परश्च शब्दो नीच एव। स्वरितनीचयोर्मध्ये प्रचयानामेवैक श्रुतिः। सुत इत्यत्र विरामपरत्वेऽपि उदात्तत्वेन प्रचयत्वाभावात् स्वरितपरप्रचयाना-मेकस्य द्वयोर्वा बहूनां वा विरामे नीचे वा प्रत्यये एकश्रुतिः। अत एव सखायो दीर्घ जिह्व्यम् इत्यत्र जिशब्दपर्यन्तमेकश्रुतिः अन्त्यस्य व्यशब्दस्य विरामपरत्वेऽपि स्वरतत्वेन स्वरितपरत्वाभावात् सोदात्तता इत्यर्थः। तस्मादुच्चश्रुतीनि।

शिक्षां चेयं तस्मादुच्चश्रुतीनीति सूत्रसंवादिनी विजयते उदात्तानुदात्तस्वरितसंहितायां स्वरितादनुदात्तानामेकश्रुतिरिति। यदि स्वरितानुदात्तानामेकश्रुतिः स्यात्तदा तस्मादुच्चश्रुतिनीति सूत्रविरोधः स्यात् तद्व्याख्यानविरोधश्च स्यात्। स्वरितमाद्यार्ध मात्रोदात्तः शिष्टं प्रचय इति स्वरितस्य स्वरंनिर्णयाच्च। नहि स्वरितप्रचयानामैकश्रुत्यं मनसापि संभावयितुं शक्यम्।

तस्माद‍ृक्तन्त्रतद्वृत्तिशिक्षाशास्त्रान्तरादिभिस्संहितायामृचि स्वरत्रयस्यैव प्रतिपादनात् स्वरितस्य चोच्चनीचान्तर्भाव प्रतिपादनाच्च तदेकवाक्यतया पारिभाषिकवचनस्याप्यर्थो वक्तव्यः।

**एवं हि पारिभाषिक वचनम्-**

दीर्घस्थाने तु स्वरितं मात्रास्थाने तु धारयः।
पर्वस्थाने उदात्तं स्यात् प्रकृती छललक्षणम्॥
मात्रास्थाने तु स्वरितं दीर्घस्थाने तु धारयः।
पर्वस्थान उदात्तं स्यादुत्तराच्छललक्षणम्॥ इति

सङ्केतवचनमपि अनेकोदात्तानुदात्तपरम्। तत्पर एव च-

स्वरितः स्वारसंज्ञं स्याद्दीर्घस्थाने पृथग् ऋचि।
तृतीयस्वरितोदात्तोऽनेको नेक्यश्च यत्र हि॥
दीर्घस्तु शिष्यकोदात्तः पर्वस्थाने प्रकृत्यृचि।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



एकस्वरस्थननानार्णा अर्धर्चान्त्या न चेत्तदा॥
तद्धितीयादि धारी स्यात् मात्रास्थाने प्रकृत्यृचि।
स्वारधाय्योश्च दीर्घत्वं मात्रात्वे व्यत्ययेन तु॥
उत्तरायामृचि ज्ञेयो पर्वैव चिबुको भवेत्।
प्रथमादिद्धितीयान्तं पदं स्वारवदिष्यते॥
पदकाले स दीर्घः स्यादभ्यासः पर्वसंज्ञकः।
मात्राः पदानां मात्राणामेष्यन्ते सामशाखिनाम्॥
उदात्तस्वरितद्व्यचि प्रचयो निहतः स्वरः।
तत्र तु स्वरितात् पूर्व उदात्तः प्रथमः स्वरः॥
स्वरितोऽन्य उदात्तश्च प्रचयश्च द्वितीयगः।
द्वितीयस्वरः कम्पोऽनुदात्तस्तु त्रितीयगः॥
स्वरितः कम्पते तत्र यत्रोदात्तः परो भवेत्।
एकोदात्तपरः स्वारः प्रचयश्चोच्चवद् भवेत्॥
सर्वेऽशिष्टाः स्वरिताः स्वर्यन्ते सामशाखिनम्। इति

अनेकोदात्तात् परः नि होता इत्यादि। अनुदात्तात् परश्च स्वारः अया (3 1 2) व धर्स्व त न्वा गिरा (3क 2 र 3 2उ) (52) इत्यादिः। तत्परः अनेकोदात्तानुदात्ताश्च यः परो न भवति। एकोदात्तात्पर व्यतिरिक्तः कम्पव्यतिरिक्तश्च स्वारः तत्परशब्देनोच्यते। क्वे इत्यादिः। एते त्रयोऽपि स्वारसंज्ञा दीर्घस्थाने प्रकृत्यृचि। एतदेव स्वरत्रयमुत्तरासु मात्रास्थान एव त्रयाणां दीर्घत्वाय मात्रत्वाय च पारिभाषिकस्वरसंज्ञाकरणम्।

एकोदात्तात् परस्य स्वरितस्य स्वरितत्वं यदि निवर्तयेत्तदा तस्य स्वरितत्वेनोच्चारणं न स्यात्। नहि निवर्तयति। उदात्ताद्यार्धमात्रा स्वरितमित्यस्य सर्वस्वरितसाधारणत्वात्। अन्यथा कम्पस्यापि स्वरितत्वं न स्यात् पारिभाषिकस्वरितान्तर्भावाभावेन

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्वरितसंज्ञाविरहात्। प्रत्युत एकोदात्तात् परस्य स्वरितस्य नीचमुच्चात्
1 2 3 1 2
(5) इति सूत्रोदाहरणत्वे स्वादिष्ठया (468), वारवन्तम् (17) इत्यादे-रुदाहृतत्वाच्च स्वरितत्वं नास्तीति वक्तुं न शक्यम् न च। न वयमेकोदात्तात् परस्वरितस्य स्वरितत्वं निवारयामः किन्तु तस्य च ... समश्रुतित्वं ब्रूम इति वाच्यम्। किमिदं समानश्रुतित्वमुभयोः समानस्थानत्वेनोच्यतेऽथ वचनाद्वा-

स्वरितोऽन्य उदात्तश्च प्रचयश्च द्वितीयगः।

इति वचनस्य स्वरितस्य स्थानान्तराभावेन द्वितीयस्वरत्व प्रतिपादनपरस्य कम्पव्यतिरिक्तसकलस्वरितसाधारणत्वेनानेको-दात्तात् परस्यापि प्रचयसमाना श्रुतिः स्यात्। न च वचनबलेन समानश्रुतित्वम्। एवं हि वचनम्-

य एवोदात्त इत्युक्तः स एव स्वरितस्वरः।
प्रचयः प्रोच्यते तज्ज्ञैर्नचात्र स्वरितान्तरम्।। इति

समानाधिकरणवचनात्। स एव च स्वरः प्रचयात्मकः।
उदात्तस्वरितश्च प्रचयो निहते स्वरः। इति स्वर चतुष्टयगुणं न पूरकम्। तस्मादुच्चश्रुतिरिति स्वरितात् पराणि यावन्नीचं यावद्विरामं वा उदात्तश्रुतीनि भवन्तीति ऋक्तन्त्रतद्व्याख्याभ्यामुदात्तानुदात्तस्य स्वरितः संहितायां स्वरितादनुदात्तानामेक श्रुतिरिति वचनेन तु च उदात्ताद्यार्धमात्रा स्वरितमिति स्वरितस्वरूपविधायके नवस्वरितस्य च प्रचयानां च स्वरभेदविधानेन स्वरितप्रचयानामेकश्रुत्या सम्भवाच्च। तस्मादयमर्थः। कम्पानुदात्तपरा तत्परस्वरितव्यतिरिक्त-प्रचयो द्विविधः। एकोदात्तात् परोऽनेकोदात्तात् परश्चेति। तत्र एकोदात्तात् परः स्वरप्रचय उच्चवद् भवेत्। स्वरितत्वात् आद्यार्धमात्रोच्चवद् भवेत्। वच्छब्दग्रहणादीषन्न्यूनत्वं स्वरितस्वरात्

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रतीयते। अनेकोदात्तात्परस्त्वापाद्यार्धमात्रोच्च एव भवति। तदन्य एकोदात्तात्परस्वरितादन्यस्वरप्रचयश्चेत्याह –

सर्वेऽवशिष्टाः स्वरिताः स्वर्यन्ते सामशाखिनाम्।

इति न च स्वर्यन्ते उच्चवद् भवन्तीति शब्दद्वयस्यार्थभेद इति भ्रमितव्यम्। स्वर्यते आद्यार्धमात्रोच्चो भवतीत्यर्थः। उच्चवदाद्यार्ध मात्रोच्चवदित्यर्थः। उभयोः स्वरितत्वेनोच्चशब्दस्य सजातीय स्वरितार्धमात्रोच्चसमानार्थकत्वात्। तथा च एकोदात्तात् परः स्वरितः स्वरितपदवक्तव्यः अनेकोदात्तात् परस्तु स्वरिततयैव वक्तव्य इति एकैकस्य

एकोदात्तात्परस्वारप्रचयश्चोच्चवद् भवेत्।
सर्वेऽवशिष्टाः स्वरिताः स्वर्यन्ते सामशाखिनाम्॥

इति । ऋक्तन्त्रकारादिवचनस्य सर्वेऽपि स्वरिता आद्यार्धमात्रा एवोदात्ता एव भवन्तीत्यर्थ एव विवेकः।

॥ ऋक्तन्त्रं समाप्तम्॥

ॐ-----तत्-----ॐ-----सत्-----ॐ

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



# अकारादिसूत्रानुक्रमणिका



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





0-----ॐ-----0

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



# ऋक्तन्त्रस्थ पारिभाषिकशब्दावली

| | | |
|---|---|---|
| अङ् | 112, 143 | पादमर्धीय |
| अण् | 71, 77 | पादादिः |
| अयुक् | 252 | अयुक्तः |
| अर् | 256 | अक्षरः |
| उत् | 51, 54,55,156 | उदात्तः |
| उच्चश्रुति | 61 | प्रचयः |
| ऋक् | 154 | आर्चिकः |
| | 282 | अक्षर |
| खिङ् | 145 | पादोपान्तीय |
| र्ग | 13 | वर्गः |
| ग्रा | 113 | ग्रामगेयगानम् |
| घ | 50,93,103,112,113,148 | दीर्घः |
| घु | 236, 237 | लघुः |
| चु | 255 | दीर्घभावः |
| ण | 148 | पादान्तीय |
| ठ्य | 147 | कण्ठ्यः |
| ति | 29 , 110 | गतिः |
| द | 69, 272 | पदः |
| द्विवर्ण | 3.4.5 | वृद्धिः |
| भ | 150 | स्तोभ |
| म | 54 | विरामः |
| मत् | 64 | प्रकृतिमत् |
| मास | 1, 125 | समासः |
| युक् | 90 | युक्तः |
| र | 107 | रेफः |
| र | 26,68,119,169, 257, 265, 269 | स्वरः |
| र | 270 | पर |
| रण | 181 | करण |
| लुप् | 83,156 | लोपः |
| वत् | 52 | उदात्तवत् |
| व्यवधान | 185 | आगमः |
| व्य | 241 | तालव्यः |
| वृद्ध | 44, 68 | प्लुतः |
| सण् | 27, 49, 269 | संयोगः |
| सन्ध्य | 98, 8 | सन्ध्यक्षरः |
| समान | 1.2 | समानाक्षरः |
| स्व | 25, 150 | ह्रस्वः |
| स्था | 169 | अन्तस्था |
| ष्मिन् | 245 | ऊष्मन् |

0-----ॐ-----0

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



# सूत्रस्थ शब्दानुक्रमणिका



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





सामवेदीयं ऋक्तन्त्रनामक ऋक्लक्षणग्रन्थं समाप्तम्

(सव्याख्या,सविवरणं,हिन्दी अर्थेन साकं ऋक्तन्त्रविवृत्या सहितम्)

0-----ॐ-----0

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



# व्यञ्जनवर्णानां कोष्ठकम्

| योगवाह व्यञ्जनम् | | अयोगवाह व्यञ्जनम् | |
|---|---|---|---|
| स्पर्शः | क ख ग घ ङ | विसर्जनीयः - | अः |
| | च छ ज झ ञ | | |
| | ट ठ ड ढ ण | | |
| | त थ द ध न | जिह्वामूलीयः- | क |
| | प फ ब भ म | | |
| अन्तःस्थः | य र ल व | उपध्मानीयः - | प |
| उष्मन् | ह श ष स | अनुनासिकः - | हुं |
| | | यमाः - | कुं खुं गुं घुं |
| | | अनुस्वारः- | अं आं |

## उद्देशक्रमः

| योगवाहः | | | अयोगवाहः | |
|---|---|---|---|---|
| स्वरः | | | | |
| समानानि | अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ | | अः | विसर्जनीयः |
| सन्ध्यक्षराणि | ए ऐ ओ औ | | क | जिह्वामूलीयः |
| | | व्यञ्जनम् | | |
| स्पर्शः | क ख ग घ ढ | | प | उपध्मानीयः |
| | च छ ज झ ञ | | | |

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



|  |  |  |  |
|---|---|---|---|
|  | ट ठ ड ढ ण |  |  |
|  | त थ द ध न |  |  |
|  | प फ ब भ म |  |  |
| अन्तःस्थः | य र ल व | हुं | अनुनासिकः |
| उष्मन् | ह श ष स | कुं खुं गुं घुं | यमः |
|  |  | अं आं | अनुस्वारः |

उपदेशक्रमः

स्वरः

=================================================================

| समानानि |  | सन्ध्यक्षराणि |
|---|---|---|
| ह्रस्वः | दीर्घः |  |
| ऋ ऌ इ उ अ | आ ॠ ई ॡ ऊ | ए ओ ऐ औ |

व्यञ्जनम्

वर्गस्थ वर्णाः-

| प्रथमः | द्वितीयः | तृतीयः | चतुर्थः | पञ्चमः |
|---|---|---|---|---|
| क | ख | ग | घ | ङ |
| च | छ | ज | झ | ञ |
| ट | ठ | ड | ढ | ण |
| त | थ | द | ध | न |
| प | फ | ब | भ | म |

अन्तःस्थाः - र य व ल

उष्मन् - ह श ष स

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अयोगवाहाः

विसर्जनीयः - अः
जिह्वामूलीयः- क
उपध्मानीयः - प
अनुनासिकः - हुं
यमाः - कुं खुं गुं घुं
अनुस्वारः - अं आं

## बाह्यप्रयत्नः

---

स्वरतन्त्र्याधारेण ऊष्मताधारेण

घोषः अघोषः सोष्मन् ऊष्मन्

नादः श्वासः खघ ह श ष स

ग घ ङ क ख छ झ
ज झ ञ च छ
ड ढ ण ट ठ
द ध न त थ
ब भ म प फ
ह य र ल व श ष स

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## आभ्यन्तरप्रयत्नानां वर्णप्रकोष्ठः

| संवृतः | विवृतः | विवृततरः | स्पृष्टः | दुःस्पृष्टः |
|---|---|---|---|---|
| ग घ ङ | अ आ इ ई | ऐ | क ख ग ध ङ | य र ल व |
| ज झ ञ | उ ऊ ऋ ॠ | औ | च छ ज झ ञ | |
| ड ढ ण | लृ लॄ ए | | ट ठ ड ढ ण | |
| द ध न | ओ | | त थ द ध न | |
| ब भ म | ह श ष स | | प फ ब भ म | |
| ह य र ल | | | | |

## ऋक्तन्त्रानुसारेण वर्णानां विशदरूपेण ध्वन्यात्मकं विवेचनम्

स्वराः-

(1) समानम्  (2) सन्ध्यक्षरम्

व्यञ्जनम्-

(अ) स्पर्शः-

(1) कण्ठ्यः,  (2) तालव्यः,  (3)मूर्धन्यः

(4) दन्त्यः ,  (5) ओष्ठ्यः

(आ) अन्तःस्थः

(इ) ऊष्मन्

अयोगवाहः-

(1) विसर्जनीयः, (2)जिह्वामूलीयः, (3) उपध्मानीयः

(4) अनुनासिकः, (5) यमाः , (6) अनुस्वारः

सामवेदीय ध्वनिः

(1) किट् किट्  (2) प्न्य  (3) हं

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## स्वराः

**(1)समानानि-**

अ-यः वर्णः ह्रस्वः, दीर्घः, वृद्धस्वरः। अनेन नादानुप्रदानः, विवृत्, कण्ठ्यादि ध्वनिगुणाः भवन्ति। अस्य करणं हनुमध्यः।

इ- यः द्वितीयः समानस्वरः। अस्य मात्रा त्रिमात्रिकः, नादानुप्रदानः, विवृतः एवं तालव्यध्वनिः। अस्य करणं जिह्वामध्यः।

उ- यः वर्णः त्रिमात्रायुक्तः, नादानुप्रदानः, विवृतः एवं ओष्ठ्यध्वनिः। ओष्ठ्य सहाय्येन उच्चरितत्वात् अस्य करणं ओष्ठ्यः भवति।

ऋ- यः वर्णः चतुर्थः समानाक्षरः भवति। अस्यापि ह्रस्वः, दीर्घः, वृद्ध मात्रायुक्तः, नादानुप्रदानः, विवृत एवं जिह्वामूलीय ध्वनिः । अस्य करणं हनुमूलम्।

ऌ- यः वर्णः पञ्चम एवं अन्तिमः समानस्वरः वर्तते। अनेन त्रिमात्रा भवन्ति। अस्य अनुप्रदानः नाद संज्ञकवायुः भवति। आभ्यन्तर प्रयन्तः विवृतः। अस्य दन्तस्थानीय उच्यते एवं करणं जिह्वाग्रः।

**(2) (सन्ध्यक्षरम्)**

ए – प्रथमसन्ध्यक्षरत्वेन ज्ञायते। अस्य वर्णस्य निष्पत्तिः अ +इ = (ए) संयोगे भवति। एषः नादानुप्रदानः, विवृततरः, दीर्घः, वृद्धः, तालुस्थानीय ध्वनिः भवति। अस्य करणं जिह्वामध्यः भवति।

ऐ- एषः द्वितीयः सन्ध्यक्षरः। अस्य अ +ए = (ऐ) सन्ध्याः फलस्वरुपम्। एषः नादानुप्रदानः, विवृततरः, दीर्घः, वृद्धः, एवं तालुस्थानीय ध्वनिः भवति। अस्य करणं जिह्वामध्यः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ओ- अस्य अ +उ = (ओ) संयोगस्य फलस्वरूपं निष्पन्नः तृतीय सन्ध्यक्षरः। अनेन नादानुप्रदानः, विवृतः, दीर्घः, वृद्धः एवं च ओष्ठ्यादि ध्वनिगुणः भवति। ओष्ठ्यः अस्य करणम्।

औ- अस्य निष्पत्तिः अ +ओ = (औ) संयोगोपरान्तं जातम्। यः नादानुप्रदानः, विवृततरः, दीर्घः, वृद्धः, ओष्ठ्यः ध्वन्यात्मकः वर्णः भवति। अस्य करणं ओष्ठ्यः।

## (व्यञ्जनानि)

(अ) **स्पर्शः**- व्यञ्जनानामन्तर्गतः वर्णानां मध्ये स्पर्शवर्णानां स्थानं प्रमुखं वर्तते। एतेषां विभागः एवं प्रकारेण भवति।

यथा- (1) कण्ठ्यः (2) तालव्यः (3)मूर्धन्यः (4) दन्त्यः (5) ओष्ठ्यः (6) उरः (7) जिह्वामूलीयः

एतेषां वर्णानां विवरणं निम्नलिखित प्रकारेण दीयते-

क- एषः कवर्गीयः प्रथमवर्णः। अनेन श्वासानुप्रदानः, अघोषः, जिह्वामूलः एवं दुःस्पृष्टः ध्वनिगुणः भवति।

ख- एषः कवर्गीयः द्वितीयवर्णः। अस्य श्वासानुप्रदानः, सोष्मः, अघोषः, स्पृष्टः एवं जिह्वामूलीयः ध्वनिः भवति।

ग- कवर्गस्य तृतीयवर्णः। एषः घोषः, नादानुप्रदानः, संवृतः, घोषः, स्पृष्टः एवं जिह्वामूलध्वनिगुणेन युक्तः भवति।

घ- एषः कवर्गस्य चतुर्थः वर्णः। अस्य ध्वनिगुणः संवृतः, घोषः, नादानुप्रदानः, सोष्मः, स्पृष्टः एवं जिह्वामूलं भवति।

ङ- एषः वर्गस्य पञ्चम एवं अन्तिम अनुनासिकः अक्षरः। एषः घोषः, संवृतः, नादानुप्रदानः, स्पृष्टः, एवं जिह्वामूलीय वर्णः भवति।

च- एषः चवर्गीयः प्रथमः तालव्यध्वनिः भवति। अस्य अन्यः गुणः अघोषः, श्वासानुप्रदानः, स्पृष्टः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



छ- एषः चवर्गीयः द्वितीयः तालुस्थानीयः ध्वनिः भवति। अनेन सोष्मः, श्वासानुप्रदानः, अघोषः, स्पृष्टादि गुणः अवस्थीयते।

ज- एष- वर्गस्य तृतीयवर्णः। एषः घोषः, नादानुप्रदानः, संवृतः, एवं स्पृष्टादि ध्वन्यात्मक गुणेन युक्तः भवति।

झ- एषः चवर्गस्य चतुर्थः तालव्यध्वनिः भवति। अनेन घोषः, नादानुप्रदानः, सोष्मः, संवृतः, स्पृष्टादि ध्वन्यात्मकगुणानां समाहारः भवति।

ञ- एषः वर्गस्य अन्तिमः अनुनासिकः तालुस्थानीय वर्णः। अस्य ध्वनिगतविशेषे घोषः, नादानुप्रदानः, अनुनासिकः, स्पृष्टादीनां गणना भवति।

ट- एषः प्रथमः मूर्धन्यध्वनिः। अस्य गुणः श्वासानुप्रदानः, अघोषः एवं स्पृष्ट इति।

ठ- एषः द्वितीयः मूर्धन्यध्वनिः। अस्य ध्वनि वैशिष्ट्यत्वे अघोषः, श्वासानुप्रदानः, सोष्मः एवं स्पृष्टस्य गणना क्रियते।

ड- एषः तृतीयः मूर्धन्यवर्णः। अस्य घोषः, नादानुप्रदानः, संवृतः एवं स्पृष्टादि ध्वनिगत विशेषयुक्तः भवति।

ढ- एषः चतुर्थः मूर्धन्यः अक्षरः। अस्य अन्यः ध्वन्यात्मकः गुणः भवति यथा घोषः, नादानुप्रदानः, सोष्मः, संवृतः एवं स्पृष्टः।

ण- एषः अन्तिमः अनुनासिकः एवं मूर्धन्यध्वनिः। अस्य घोषः, नादानुप्रदानः, संवृतः एवं स्पृष्टादि ध्वनिगुणः भवति।

त- एषः तवर्गीयः प्रथमः दन्त्यः वर्णः। अनेन अघोषः, श्वासानुप्रदानः एवं स्पृष्टध्वनिगुणः समावेशः अस्ति।

थ- एषः तवर्गीयः द्वितीयः दन्त्यवर्णः। अस्य ध्वनिगुणः सोष्मः, अघोषः, श्वासानुप्रदानः एवं स्पृष्टः इति।

द- एषः तृतीयः दन्त्यवर्णः। अनेन घोषः, नादानुप्रदानः, संवृतः एवं स्पृष्टध्वन्यात्मकगुणः विद्यते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ध- एषः तवर्गीयः चतुर्थः दन्त्यध्वनिः एवं सोष्मः, घोषः, नादानुप्रदानः, संवृतः एवं स्पृष्टध्वनिः भवति।

न- एषः दन्त्यवर्गीयः अन्तिमः अनुनासिकध्वनिः। अस्य घोषः, नादानुप्रदानः, संवृतः एवं स्पृष्टगुणः भवति।

प- एषः पवर्गीयः प्रथमः ओष्ठ्यवर्णः एवं अस्य अघोषः, श्वासानुप्दानः, स्पृष्टगुणयुक्तः भवति।

फ- एषः पवर्गीयः द्वितीयः ओष्ठ्यवर्णः। अनेन सोष्मः, अघोषः, श्वासानुप्रदानः एवं स्पृष्टगुणः अस्ति।

ब- एषः पवर्गीयः तृतीयः ओष्ठ्यध्वनिः। अस्य गुणस्तावत् घोषः, नादानुप्रदानः, संवृतः एवं स्पृष्टः।

भ- एषः स्वस्य वर्गस्य चतुर्थः ओष्ठ्यवर्णः। अस्य सोष्मः , घोषः, नादानुप्रदानः एवं स्पृष्टगुणाः विद्यन्ते।

म- एषः पवर्गीयः अन्तिमः अनुनासिकवर्णः अस्ति। अस्य ध्वन्यात्मकगुणेषु घोषः, नादानुप्रदानः, संवृत एवं स्पृष्टस्य परिगणना क्रियते।

(आ) **अन्तःस्थाः** - अन्तःस्थवर्णेषु य, र, ल एवं व काराणां गणना भवति। अस्य विवरणं एवं प्रकारेण भवति। यथा-

य- एषः अन्तःस्थः वर्णेषु प्रथमः । अस्य घोषः, नादानुप्रदानः, तालु, संवृतः, एवं दुःस्पृष्टादि गुणाः विद्यन्ते।

र- एषः द्वितीयः अन्तःस्थः वर्णः। अस्य गुणास्तावत् घोषः, नादानुप्रदानः, संवृतः, दुःस्पृष्टः एवं दन्तमूलीयः।

ल- एषः अन्तःस्थवर्णे तृतीयस्थानीयः। अस्य दन्त्यः, घोषः, नादानुप्रदानः, संवृतः एवं दुःस्पृष्टगुणाः भवन्ति।

व- एषः अन्तिमः अन्तःस्थवर्णः। अस्य ध्वन्यात्मकः गुणस्तावत् ओष्ठ्यः, घोषः, नादानुप्रदानः, एवं दुःस्पृष्टत्वम्।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(ङ) **ऊष्मन्**- ऊष्मवर्णानामन्तर्गतः ह श ष एवं स कारस्य गणना क्रियते। अस्य ध्वन्यात्मकः गुणः एवं प्रकारेण-

ह- एषः प्रथमः ऊष्मवर्णः। अस्य कण्ठ्यः, घोषः, नादानुप्रदानःष संवृतः एवं विवृतादि गुणानां समाहारः भवति।

श- एष- द्वितीयः ऊष्मवर्णः। अस्य गुणेषु अघोषः, नादानुप्रदानः, तालु, विवृतादीनां गणना क्रियते।

ष- एषः तृतीयः ऊष्मवर्णः। अस्य मूर्धन्यः, अघोषः, श्वासानुप्रदानः एवं विवृतगुणः भवति।

स- एषः अन्तिमः ऊष्मवर्णः। अस्य गुणेषु दन्त्यः, अघोषः, श्वासानुप्रदानः एवं विवृतप्रमुखाः भवन्ति।

**अयोगवाहः-**

विसर्जनीयः, जिह्वामूलीयः, उपध्मानीयः, अनुनासिकः, यमः एवं अनुस्वार अयोगवाहः कथ्यते। एते ध्वनयः पराश्रिताः भवन्ति। अतः येन वर्णेन साकं संयुक्तः भवति तस्य वर्णस्यैव अङ्गी भवति। एतेषां गुणानां विवेचनं एतत्प्रकारेण क्रियते-

(1)विसर्जनीयः (अः)- एतम् कण्ठ्यः तथा उरस्य पराश्रितध्वनिः कथ्यते।

(2) जिह्वामूलीयः (क)- एषः जिह्वामूलात् उच्चरितः पराश्रितध्वनिः।

(3) उपध्मानीयः (घ) - एषः ओष्ठ्यः पराश्रितध्वनिः।

(4) अनुनासिकः - हुं अनुनासिकत्वेन मन्यते। एषः नासिकात् उच्चरितः पराश्रितध्वनिः।

(5) यमः-कुं खुं गुं एवं घुं इत्यादीनां यमवर्णानां नासिक्यध्वनिः कथ्यते।

(6) अनुस्वारः (अं आं) – एषः नासिक्यपराश्रितध्वनिः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



**सामवेदीयध्वनिः-**

ऋक्तन्त्रे सामवेदसम्बन्धितः कतिपय ध्वनिनां विवेचनं कृतम् तत्तु एवं प्रकारेण-

किट् किट् – अस्य उच्चारणस्थानं हनुः।

प्न्य- एषः संस्वादे उच्चार्यमाणः ध्वनिः।

हुं- एषः ध्वनिः निगारे उच्चार्यते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



# सन्दर्भग्रन्थसूची


आर्षेयब्राह्मणम् — डा.वि.आर् शर्मा, राष्ट्रियसंस्कृत विद्यापीठम्, तिरुपति, 1962

जैमिनीयब्राह्मणम् — डा.रघुवीर, नागपुर, 1950

सामविधानब्राह्मणम् — डा.वि.आर् शर्मा, राष्ट्रियसंस्कृत विद्यापीठम्, तिरुपति, 1964

निरुक्तम् — पं.शिवदत्त शर्मा, क्षेमराज श्रीकृष्णदास मुम्बई, संवत् 1969

अथर्वप्रातिशाख्यम् — डा.सूर्यकान्तः, मेहरचन्द लक्षणदास, दिल्ली, 1968

अथर्ववेदीया चतुराध्यायिका — डा.जमुनापाठकः,वाराणसी,1998

ऋग्वेदप्रातिशाख्यम् — डा.वीरेन्द्रकुमार वर्मा, चौखम्बा संस्कृत प्रतिष्ठानम्, दिल्ली,1999

ऋक्तन्त्रम् — डा.सूर्यकान्तः, मेहरचन्द लक्षणदास, दिल्ली, 1970

ऋक्तन्त्र एक परिशीलन — डा.सुरेशप्रकाश पाण्ड्ये, परिमल पब्लिकेशन्स , दिल्ली,1991

लघुऋक्तन्त्रसंग्रहः — डा.सूर्यकान्तः, मेहरचन्द लक्षणदास, लाहौर, 1940

पुष्पसूत्रम् — म.रामनाथदीक्षितः, माद्रास, 1989

फुल्लपोतम् — डा गिरिजाप्रसाद षडङ्गी, राणायनीय-संशोधनाप्रतिष्ठानम्, तिरुपति, 2013

तैत्तिरीयप्रातिशाख्यम् — डा.जमुनापाठकः, चौखम्बासंस्कृतसीरीज, वाराणसी, 2007


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वाजसनेयि प्रातिशाख्यम् - रामकुमारलाल, चौखम्बासंस्कृतसीरीज, वाराणसी,1963

सामतन्त्रम् ए.एम्.रामनाथ दीक्षित, काशी हिन्दू विश्वविद्यालय प्रकाशनम्, वाराणसी, 1961

वाजसनेयि प्रातिशाख्यम् डा.वीरेन्द्रकुमार वर्मा, ज्ञानप्रकाश प्रतिष्ठानम्, वाराणसी,1975

नारदीय शिक्षा डा गिरिजाप्रसाद षडङ्गी, तिरुपति, 2014

पाणिनीयशिक्षा श्रीरुद्रप्रसाद अवस्थी, चौखम्बा संस्कृत सीरीज, वाराणसी,1972

याज्ञवल्क्यशिक्षा अमरनाथ शास्त्री, ज्योतिषप्रकाशप्रेस, वाराणसी, 1962

माण्डुकीशिक्षा भगवत् दत्त, अनुसन्धान विभागः, दयानन्द महाविद्यालयः, लाहौर,1921

शौनकशिक्षा के.एन्.एम.दिवाकर गजेन्द्रः,1962

काशिकावृत्तिः ब्रह्मदत्त जिज्ञासुः, चौखम्बा संस्कृत सीरीज, वाराणसी, 1952

चान्द्रव्याकरणम् डा.फतहसिंह, राजस्थान प्राच्यविद्या प्रतिष्ठानम्, जोधपुर, 1967

मुग्धबोधव्याकरणम् जीवानन्द विद्यासागर भट्टाचार्यः, कलकत्ता, 1902

हरिनामामृतव्याकरणम् श्रीचैतन्यरिसर्च इन्स्टीट्यूट, कलकत्ता, 1972

बृहद्देवता डा.रामकुमार राय, चौखम्बा विद्याभवन, वाराणसी, 1963

सामवेदपदपाठः डा गिरिजाप्रसाद षडङ्गी. तिरुपति.1996

सिद्धान्तकौमुदी चौखम्बासंस्कृतसंस्थान, वाराणसी,1994

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



# ।।प्रकाशितानि पुस्तकानि ।।

1.गौतमीयापरसूत्रप्रकाशः, सव्याख्या,पृष्ठाः-202,मूल्यम्-100/-

2.सामवेदराणायनीयं वर्गपरिभाषाधारितवेयगानम्, प्रथमोभागः, पृष्ठाः-250, मूल्यम्-200/-

3. सामवेदराणायनीयं वर्गपरिभाषाधारितवेयगानम् द्वितीयोभागः, पृष्ठाः-312, मूल्यम्-200/-

4.फुल्लपोतम्, (सामवेदलक्षणग्रन्थम्) गणेणपण्डितकृत व्याख्या सहिता, पृष्ठाः-452, मूल्यम्-300/-

5. नारदीयशिक्षा, भट्टशोभाकरकृत विवरणेन, नारायणस्वामि -दीक्षितकृत प्रकाशाख्यटिप्पण्यान्वयेन च संवलिता तथा नारदीयशिक्षासंग्रहयुता च, पृष्ठाः-166, मूल्यम्-125/-

6. सामवेदसन्ध्योपासना (सन्ध्योपासना, समिदाधानं, ब्रह्मयज्ञः, देवर्षिपितृतर्पणं, भोजनविधिः, उपवीतकरणधारणविधिसहिता ), पृष्ठाः - 64, मूल्यम्-50/-

7.सामवेदपदपाठः, बृहत्परिशिष्टेन संवलितम्, पृष्ठाः-472, मूल्यम्-750/-

8.सामवेदीयाष्टब्राह्मणानि(मूलपाठः) पृष्ठाः-566,मूल्यम्1000/-

9.जैमिनीय ऊह ऊषाणी, पृष्ठाः-376, मूल्यम्-1000/-

10. ऋक्तन्त्रम् सभाष्यम्, पृष्ठाः 246, मूल्यम्-350.00

11. सामप्रभा- शोधनिबन्धसंग्रहः, पृष्ठाः-144, मूल्यम्-150

12. सामवेदीय श्रौतस्मार्तकारिकासंग्रहः, पृष्ठाः-248, मूल्यम्-450

13.सामवेदीय कर्मप्रदीपः (छन्दोगपरिशिष्टः) सभाष्यम्, पृष्ठाः-278, मूल्यम्-400.00

14. सामवेदीय प्रकृतिगानम्, पृष्ठाः -536, मूल्यम्-850.00

15. सामवेदीय उहरहस्यगानम्

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

## Dr Girijaprasad Shadangi



Date of Birth : 23rd November 1971
Linguistic Proficiency : Sanskrit, Hindi, Kannada, Telugu, Odia & English
Hobbies & Interest : Research and Development of Vedic & Sanskrit Literatures
Personality : Positive, Honest, Hard Working & Co-operative
Study veda sakha : Kouthuma & Ranayaniya sakha in Samaveda
Research : Jaiminiya Sakha of Samaveda
Gotra & Pravar : Bharadwaja (Angirasa- Barhasptaya-Bharadwaja)

### WORK EXPERIENCE:

1. Darsanam Sanskrita Mahavidyalaya, Ahamedabad, as a Samaveda & Sanskrit educator from September 2003 to April 2006.
2. Worked as researcher for a year with Sri Kailasa Sagarasuri gyana mandir library, Koba, Ahmedabad,. in "Palm leaf Research Project" from June 2006 to May 2007.
3. Worked as a Samaveda educator at Sri Venkateswara Vedavigyana Peetham, Dharmagiri, Tirumala, Tirupati. from Jan 2008 to June 2009.
4. Working as Assistant Professor in Samaveda since 12th June 2009 in S.V. Venkateswara Vedic University, Tirupati. Andhra Pradesh.

### EXTRA ACHIEVEMENTS:

1. Got Tamrapatra Award for "Samaveda Parangata", Ujjain,(M.P) in 2003.
2. Translated the book "Goutamiya Nityakarma Padhati" Sanskrit to Odia in 2003.
3. Trained in preservation of "Palm leaf, Hastaprata and objects in Museums" from Sri Manjuatheswara Cultural Research Foundation, Dharmasthala, Karnataka.
4. Participated in "Civil Defence Basic Training",Government of Gujarat.

### EDUCATIONAL QUALIFICATIONS:

Veda Vidwan Madhyama (B.A) (Samaveda Rahasyantam) Veda Vidwaduttama (M.A) (Samaveda Smartaprayoga) in Medha Dakshinamurthy Vedabhavan Sanskrit College, Gokarna ,Karnataka.,Veda Vidwaduttama (M.A) (Samaveda Ghananta) in Maharaja Veda Sanskrita Govt College, Mysore, Master of Arts (Sanskrit) in Karnataka State Open University, Mysore, Ph.D in Samaveda S.V. Vedic University, Tirupati, Passed Samaveda Sahmita Aranyaka, Brahmana & Chhandogya Upanisad Examination from Orthodox National League Vijayawada, and Samaveda Rahasyanta & Chhandogyantam Examination from Srimadasastra Parishata Rajamundry Andhrapradesh.

### SEMINAR & PUBLICATIONS:

Attended more than 35 National and International conferences, presented more than 35 papers and published 10 books related to Samaveda.


9 789352 919789

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.